# Kavyalankarasutra Vritti

with the commentary



## KAMADHENU



SRIRANGAM :

SRI VANI VILAS PRESS

1909

॥ श्रीः ॥

# ॥ काव्यालंकारसूत्रवृत्तिः ॥

**वामनविरचिता**

**श्रीगोपेन्द्रतिप्पभूपालविरचितया**

कामधेन्वाख्यया व्याख्यया

समुद्भासिता

'अभिनवभट्टबाणशब्दतर्कालंकारविद्याभूषण'

विरुदभाजा वात्स्यचक्रवर्तिना

**श्रीकृष्णसूरिणा**

सम्यक्परिशोधिता



श्रीरङ्गनगरस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

समुद्रिता ।

१९०९

# PREFACE

WHEN it was first proposed to include this book in the Sri Vani Vilas Sastra Series two considerations weighed in my mind. The first was there was no good and accurate edition of the work The Kavyamala Series contained the text of the Sutras and the Vritti but unfortunately this edition left much to be desired. The Sutras were mistaken for the Vritti in several places and *vice versa* Hence a correct edition was a necessity The second consideration was to publish the rare commentary called Kamadhenu by Gopendra Tippa Bhupala. Two fine manuscripts of this commentary were obtained through the kindness of Sri Addanki Kumaratatacharar of Madras and Sri Srisailatatacharar of Little Conjeeveram With the aid of these, this edition was begun and while it was in the press, there appeared in the Chowkamba Sanskrit Series this same work with this very commentary A perusal of it clearly showed that I need not delay this edition and accordingly with the co-operation of Pandit R. V Krishnamacharar, to whom my thanks are due, I have been able to complete this work and I leave it to the readers to judge how far I was justified in having pushed on this edition when others existed already in the field.

*T K Balasubrahmanyam*



## ॥ विषयानुक्रमणिका ॥


| | | | पृष्ठम् |
|---|---|---|---|
| भूमिका | | | ।४ |
| **प्रथमाधिकरणम् ।** | | ... | १—३८ |
| **प्रथमोऽध्यायः ।** | | ... | १—१२ |
| प्रयोजनपरीक्षा | | .. | ४ |
| **द्वितीयोऽध्यायः ।** | | ... | १३—२५ |
| अधिकारिचिन्ता | | ... | १३ |
| रीतिनिश्चय | | ... | १५ |
| **तृतीयोऽध्यायः ।** | | .. | २६—३८ |
| काव्याङ्गानि | ... | ... | २६ |
| काव्यभेदः | | ... | ३४ |
| **द्वितीयमधिकरणम् ।** | .. | . | ३९—६८ |
| **प्रथमोऽध्यायः ।** | .... | ... | ३९—५२ |
| पददोषाः | | .. | ३९ |
| पदार्थदोषा | | ... | ४३ |
| **द्वितीयोऽध्यायः ।** | ... | | ५३—६८ |
| वाक्यदोषाः | .... | .. | ५३ |
| वाक्यार्थदोषाः | .... | .. | ५८ |
| **तृतीयमधिकरणम् ।** | ... | .. | ६९—९७ |
| **प्रथमोऽध्यायः ।** | .. . | .. | ६९—८३ |

| | पृष्ठम् |
|---|---|
| गुणालंकारविवेकः ... ... | ६९ |
| शब्दगुणनिरूपणम् .... ... | ६९ |
| **द्वितीयोऽध्यायः ।** ... ... | ८४—९७ |
| अर्थगुणनिरूपणम् .... ... | ८४ |
| **चतुर्थमधिकरणम् ।** ... .. | ९८—१४७ |
| **प्रथमोऽध्यायः ।** ... ... | ९८—११० |
| शब्दालंकारविचारः .... ... | ९८ |
| **द्वितीयोऽध्यायः ।** ... ... | १११—१२४ |
| उपमानिरूपणम् .... ... | १११ |
| उपमादोषकथनम् .... | ११५ |
| **तृतीयोऽध्यायः ।** ... .. | १२५—१४७ |
| उपमाप्रपञ्चनिरूपणम् .. .. | १२५ |
| **पञ्चममधिकरणम् ।** .. | १४८—१९२ |
| **प्रथमोऽध्यायः ।** .... ... | १४८—१५५ |
| काव्यसमयः .. ... | १४८ |
| **द्वितीयोऽध्यायः ।** .... ... | १५६—१९२ |
| शब्दशोधनम् | १५६ |



॥ श्रीः ॥

# ॥ भूमिका ॥

साहित्यकलायामलंकारनिबन्धनेषु प्राचीनमत्युत्तमं चेदं सवृत्ति काव्यालंकारसूत्राख्यं वामनीयं निबन्धरत्नम् । पुरा हि सर्वेष्वपि दर्शनेषु स्मृतिपथारोपणसौकर्याय ते ते महर्षयः परे च मेधाविनः प्रायः सूत्रात्मनैव विषयानुपनिबबन्धुरिति स्पष्टमिदं पुरातनचरितपरिशीलिनाम् । अतोऽपि सुकरमस्य वामनीयस्य प्राचीनत्वमवगन्तुम् । वामनात्पूर्वं च भामहप्रभृतयो यद्यप्यलंकारदर्शने निबन्द्धारः, तथापि ते किल कारिकारूपेणैव कलयामासुर्विषयानिति नात्र वामनेन ते तुलामधिरोढुं प्रभवन्ति । अलंकारदर्शनपरमतत्त्वस्य रसस्य स्वरूपादिविचारपराणि सूत्राणि महर्षिणा भरतेन प्रणीतानीति श्रूयते । परं तु बहुभिर्बहुधा [1]व्याख्यायमानम् 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इत्येकं विहाय नान्यत्किंचिदपि संप्रति भरतप्रणीतमुपलभामहे सूत्रम् । सांप्रतमधिगम्यमानं बह्वर्थप्रतिपादकं भरतप्रणीततया व्यवह्रियमाणं नाट्यशास्त्रं तु प्रायेण कारिकात्मना क्वचित्क्वचित्सूत्रविलक्षणगद्यरूपेण चोपनिबद्धमेव सर्वतः समुपलभ्यते । पश्यामश्च वयं पूर्वोक्तं सूत्रमस्मिन्नाट्यशास्त्रेऽपि । किं तु नास्माकं निर्णयः, यदित एवेदं सूत्रमुद्धृत्य तैस्तैर्मेधाधनैरन्यथा चान्यथा च व्याख्यायत इति । यत इहैव एकतमपक्षावलम्बनपर्याप्ता ग्रन्थकृतैव प्रदर्शिता कापि विवृतिः । 'उक्तं हि भरतेन' इति प्रकाशं व्याचक्षाणो हि महेश्वरः 'तदीयग्रन्थान्तरोक्तकारिकाकथने च तस्य प्रकृतग्रन्थकृत्त्वाभावात् ग्रन्थकृतेति नोक्तम्' इति विलिखन्, मानवधर्मसूत्रमनुस्मृत्योरिव भरतसूत्रनाट्यशास्त्रयोः परस्परसंबन्धमभिप्रेतीत्यवगम्यत इति तदिदं मन्यामहे युक्तमभिहितं विमृश्यवादिना । अथवा एतदेव नाट्यशास्त्राभिहितं सूत्रमालंकारिकैरनेकधा व्याख्या-

1. दृश्यतां काव्यप्रकाशरसगङ्गाधरादिषु व्याख्याभेदः ।

यत इत्यभ्युपगच्छाम । कचित्कचित्सूत्रविलक्षणमपि वाक्यं श्रद्धाजाड्येन सूत्रमित्यङ्गीकुर्मः । तदेतदस्माकं सर्वात्मना भवति भूषणम्, नांशतोऽपि किमपि दूषणम् । एतदेव खलु वयमभिधातुमभिलषामः— न खल्वस्ति संप्रति समुपलभ्यमानेषु अलंकारदर्शननिबन्धेषु, विहाय वामनीयम्, प्राचीनं किमपि संपूर्णं सूत्रात्मना समुपनिबद्धं निबन्धनमिति । परस्ताच्च वामनमनुकुर्वाणा राजानकरुय्यकप्रभृतयः कतिपये सूत्राणि निर्ममिर इत्यन्यदेतत् ॥

अलंकारनिबन्धनानां च भिन्नभिन्नानि प्रस्थानानि दृश्यन्ते । ध्वन्यालोकादिषु हि प्राधान्येन ध्वनिविचार एव कृतः । काव्यप्रकाशादयस्तु नाटकादिलक्षणनिरूपणादिकमंशतोऽपि न विरचयन्ति । दशरूपकादिकर्तारस्तु प्राधान्येन नाटकलक्षणादिकं संक्षेपेण रसांश्च निरूपयन्ति । रसचन्द्रिकादीनां तु रसनिरूपणं परं विषयः । अलंकारसर्वस्वकारादयस्तु अलंकारनिरूपणं परमाद्रियन्ते । आचार्यदण्डिनापि प्राचीनेन काव्यादर्शे काव्यमार्गविभागार्थालंकारशब्दालंकारा एव प्रतिपादिताः । साहित्यदर्पणादिकृतः कतिपये परमर्वाचीनाः प्रायेणालंकारदर्शनस्य सर्वा अपि गमनिकाः संक्षेपेण सम्यङ् निरूपयामासुः । तन्नैतदाश्चर्यमसंभावितं वा, यदनेनापि वामनेन अलंकारदर्शनस्य कतिपये परं विषयाः प्रतिपादिताः, न पुनः रसनिरूपणादिषु रम्यतरेष्वपि विषयेषु स्वात्मना कोऽपि समदर्शि समादर इति ॥

अत्र हि पञ्च अधिकरणानि, द्वादश अध्यायाश्च सन्ति । प्रायेण हि ब्रह्मसूत्रादिषु अध्यायस्य प्राधान्येन अन्तर्गतानामधिकरणव्यपदेशो दृश्यते । इह तु भिन्नैव विपरीतेय रीतिरिति न जानीमः किं वाभिमतं वामनस्य ॥

प्रथमे खल्वधिकरणे आदितः काव्यस्य दृष्टादृष्टार्थत्वम्, पश्चाच्च अधिकारिणं निरूप्य, आत्मत्वेन स्वाभिमता रीतिः परस्तात्प्रतिपादिता । शब्दार्थयुगलात्मकस्य हि काव्यस्य आत्मानं प्रति बहूनामभिप्रायभेद उपलक्ष्यते । अर्वाचीनाश्च तदिदं वामनमतं नाभिनन्दन्ति । विशिष्टपदरचनात्मिकायाश्च रीतेः कथं वा आत्मत्वमभ्युगम्यतां तैः । यद्यपीदं मतं गुणोद्देशसूत्रे व्याख्यात्रा महता संरम्भेण समर्थितम्; अथापि व्याख्यातृवचनं तदद्याप्यप्रतिष्ठितमेवेति ध्वनिवादिमतमिव न सहृदयानां हृदयेन संवदति वामनमतमित्येतावदेव संप्रति वक्तुं वाञ्छामः । 'सा त्रेधा वैदर्भी गौडीया पाञ्चाली चेति' इति वामनः ।

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् । तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ' इत्याचार्यदण्डी । 'सा पुनः स्याच्चतुर्विधा । वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा' इति दर्पणकृदादयः । भोजराजस्तु 'वैदर्भी चाथ पाञ्चाली गौडीयावन्तिका तथा । लाटीया मागधी चेति षोढा रीतिर्निगद्यते' इत्याह । रसान्तस्थानसूचिकानामन्यैरभिहितानामपि कैशिक्यादिवृत्तीनामिहानिरूपणं तु, रीतेर्गुणविशेषलक्षितत्वात् गुणस्य च अन्योक्तविधया प्रतिरसनियतत्वात् रीतिनिरूपणेनैव गतार्थं तन्निरूपणमिति, अत्रैवोक्तरीत्या अन्तर्भावान्न ताः पृथग्व्यपदेशमर्हन्तीति वा अभिप्रायेण स्यादिति मन्यामहे । ततश्च 'लोको विद्या प्रकीर्णं च काव्याङ्गानि' इत्युपक्रम्य, अनितरसाधारणमतिविशदं काव्याङ्गानि प्रतिपाद्य, 'काव्यं गद्यं पद्यं च' इत्यादिना काव्यभेदः सलक्षणं निरूपितः । अन्यैरभिदर्शितो ध्वन्यादिकाव्यभेदप्रकारस्तु [1]नानेनादृतः ॥

द्वितीये त्वधिकरणे प्रथमतः पदपदार्थदोषनिरूपणं परस्ताच्च वाक्यवाक्यार्थदोषनिरूपणमारचितम् । अत्र च प्रकरणे परिमिता एव दोषाः प्रदर्शिताः प्राचा वामनेन । प्रकाशादिषु तु महता प्रघट्टकेन दोषाणामवान्तरभेदा अपि बहवो निरूपिताः । संज्ञाया एकत्वेऽपि वामनमम्मटादीनां लक्षणभेदेन एकस्य लक्षणमपरस्य इतरस्य लक्षणमन्यस्येत्येवमापतितमिति सुगममेवेदं बहुग्रन्थपरिशीलिनाम् । इदमस्माकमत्र प्रतिभाति — कालानुसारेण तात्कालिकव्युत्पित्सुसमुदायानुरोधेन च खलु दोषाणामुचितं परिगणनम् । पूर्वे हि परीक्षका व्युत्पत्तिदार्ढ्यात्कठिनमपि पदजातमर्थतोऽवगन्तुमलमभूवन् । रसप्रतीतिः परं यत्र स्थगिता भविष्यति, तत्रैव दोषबुद्धिं कलयामासुः । तथा च तदानीं रसप्रतीतिस्थगनपराणामेव. न तु अर्थप्रतीतिस्थगनकारिणां दोषाणां दोषत्वमिति संख्यया तेषां न्यूनता स्वाभाविक्येव । क्रमेण च साहित्यपरिश्रमस्येव व्युत्पत्तेरपि परिक्षीणतया अर्थप्रतीतिस्थगनपराणामपि क्लेशानां कालानुरोधेन दोषगणना अवश्यकर्तव्या संवृत्तेति तदिदमेव स्यात्कारणमर्वाचीनानामालङ्कारिकाणामधिकाधिकदोषनिरूपणे कारणमिति ॥

1. 'वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलङ्कारत्वं ब्रुवता कश्चित् ध्वनिभेदोऽलंकारतयैवोक्तः । केवलं गुणविशिष्टपदरचनात्मिका रीतिः काव्यात्मत्वेनोक्ता' इति सर्वस्वकारः ।

तृतीये चाधिकरणे ओजःप्रसादादयः काव्यशोभायाः कर्तारो दश गुणाः शब्दार्थाश्रिता निरूपिताः । 'काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते' इत्याचार्यदण्डिमतमनभिनन्दतेव वामनेन 'काव्यशोभायाः कर्तारो धर्मा गुणा' 'तदतिशयहेतवस्त्वलंकाराः' इति तयोर्विवेकः प्रदर्शितः । मम्मटादयस्तु 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः' इत्याहुः । आचार्यदण्डिनेव वामनेनापि दशैव गुणा अङ्गीकृताः । भरतेनापि दशैव ते [1]स्वीकृताः । प्रकाशकारादयस्तु केषांचिद्गुणानां दोषाभावत्वमभ्युपेत्य, 'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश' इत्यातिष्ठन्ते । सति चैवं वैपरीत्यं विनिगमकाभावश्च कुतो न स्यादिति त एते प्रष्टव्या भवन्ति । दोषगुणविवेचकाभ्यां चैताभ्यां द्वितीयतृतीयाभ्यामधिकरणाभ्यां कीदृशीं कोटिमधिरूढः पूर्वेषामाचार्याणां विमर्शविभव इति ननु नव्यशिक्षितैरवश्यमिदमालोचनापथमधिरोपणीयम् ॥

चतुर्थे त्वधिकरणे प्रथमतः शब्दालंकारविचारः, पश्चादुपमाविचारः, परस्ताच्च उपमाप्रपञ्चविचारः कृतः । शब्दालंकारौ च यमकानुप्रासौ द्वावेव निरूपितौ । अर्वाचीनैस्तु वक्रोक्तिपुनरुक्तवदाभासानुप्रासयमकश्लेषचित्राण्यपि शब्दालंकारतया प्रकाशितानि । भरतस्तु यमकमेकमेव स्वयमाद्रियते । अर्थालंकारनिरूपणावसरे च सर्वेऽप्यालंकारिका उपमामेवादौ निरूपयन्ति । उपमायाः प्रकृतित्वादुपजीव्यत्वात्तन्निरूपणमेव प्रथमतः सांप्रतमिति 'उपमैका शैलूषी—' इत्यादि लिखन्तः समर्थयन्ते व्याख्यातारः । प्रदर्शयन्ति च ते प्रायः सर्वेष्वपि अलंकारेषु उपमाया अनुगममुदाहरणमुखेन । वयं पुनर्बहुधा श्राम्यन्तोऽपि विभावनाविरोधाभासादिषु बहुषु अलंकारेषु उपमानुगममपश्यन्त उपमायाः प्रकृतित्वं प्रायोवादेनेति ब्रूमः । इदमत्र वक्तव्यमस्माकमाभाति— आस्तां नाम शास्त्रीयसंप्रदायानुसारेण अलंकाराणां काव्यशरीरभूषकत्वप्रयोजनाभ्युपगमनिर्बन्धः। एतदेव पुनरलंकारयोजनस्य परमं प्रयोजनम्— यद्वक्तव्यार्थस्य स्फुटप्रतीत्या श्रोतुर्मनसि दृढं संलगनम् । निर्विवादमेवेदमभ्युपगम्यते हृदयालुभिर्विद्वद्भिर्भाषान्तरेष्वलंकारप्रयोगस्य प्रयोजनम् । अस्य च फलस्य स्वप्रयोगेण सुविशदं

1, नाट्यशास्त्रे षोडशे अध्याये ९२. पद्य दृश्यताम् ।

निर्वाहको नूनमुपमालंकार एवेति ननु जानीत यथाजातोऽपि । सोपमानमभिहितोऽर्थः स्फुटं मनसि संक्रामतीति को नु खल्वनुन्मत्तो नाभ्युपैष्यति ? यथा चोपमाया, तथा तदुपजीविनामपि परेषां भवति तदिदं फलमलंकाराणामिति न खलु दुरवगाहोऽयमर्थः सहृदयानाम् । इत एव च, मन्यामहे, कारणादागतं स्यादन्यतः प्राधान्यमुपमाया इति । अत एव चादिकाव्ये श्रीमति रामायणे भगवान्वाल्मीकिः, तदुपजीवनेन कृतार्थं परिपूतं चात्मानमभिमन्यमानो महाकविः कालिदासश्च सर्वेष्वपि स्वकीयेषु प्रबन्धरत्नेषु भूयसा उपमां तत्संनिकृष्टांश्च अलंकारान् लेशेन च तदितरान्प्रयुङ्क्ते । परिशील्यन्तां कालिदासीयानि गद्यानि पद्यानि च । कति नाम तत्र उपमास्तदुपजीविनश्च विद्यन्ते अलंकारा इति पर्यालोच्यताम् । शते पञ्चसप्तत्यधिकानि किल वाङ्मयान्येवमुपारूढकान्तीनि प्रकाशन्ते । को हि नाम महामना अलंकारतत्त्वमुपमावैभवं च जानानो विहायैतां रीतिमन्यामेव कांचिज्जातुचिदाद्रियेत । 'उपमा कालिदासस्य' इति प्रथापि निपुणं निरूप्यमाणे, विश्वसिमः, इत एव जगति सर्वतः समुपारूढा । एतदेव च सर्वात्मना संदर्शयितुं महाकविरयम् 'वागर्थाविव संपृक्तौ' इति प्रथमपद्ये प्रथमत एव उपमाशिरस्कमात्मनः साहित्यशिल्पमनल्पमाविश्चक्रे । शब्दे उच्चारिते अर्थप्रतीतिः संभवति विना विलम्बमिति प्रतिक्षणमनुभवेन जानतां शब्दार्थसंबन्धस्य नित्यत्वमजानतामपि बालानां स्वानुभवसाक्षिक एव शब्दार्थयोः परस्परमतिनिबिडः संबन्ध इति काव्यारम्भ एव साधीयसीमिमामुपमामुपनिबध्नतो महाकवेरस्य मतिमहिमानं कथं वयं वर्णयितुं प्रभवामः । एतदेव किल महाकवेरन्यविलक्षणं लक्षणम्, यदत्र विचारेण शब्दार्थसंबन्धनित्यत्वमवगच्छतां पण्डितानामिव अनुभवेन शब्दार्थयोर्निबिडं कमपि संबन्धमूहमानानां बालानामप्यनुग्रहाय तदुभयसाधारण्येनोपमायाः समुपनिबन्धो नाम । एतत्सर्वमालोच्यैव भरतेनापि 'उपमा रूपकं चैव दीपकं यमकं तथा । काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः' इत्यर्थालं...त्रय एव स्वीकृता । वामनश्चात्र आदित उपमां तद्दोषांश्च निरूप्य अनन्तरम् 'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति प्रतिज्ञाय प्रतिवस्तुप्रभृतीन् शुद्धान् सप्तविंशतिमलंकारान् लक्षणतो लक्ष्यतश्च निरूपयति । परस्ताच्च 'अलंकारस्यालंकारान्तरयोनित्वं संसृष्टिः' इति लक्षयित्वा 'तद्भेदावुपमारूपकोत्प्रेक्षावयवौ' इति द्वावाह । अर्वाचीनास्तु अल-

कारस्यालंकारान्तरयोगे संसृष्टिसंकरतद्भेदान्बहूनभ्युपगच्छन्ति। उपमाप्रपञ्चत्व च विरोधादीनां कथमित्येतदतिनिगूढं रहस्यम्। अपि नाम समासोक्त्यादिन्यायेन उभयोरर्थयोरुपमानोपमेयभावकल्पनं सहृदयहृदयसंवादि? इत्थं च वामनमते त्रिंशदर्थालंकारा इति सिद्धम्। काव्यादर्शे तु 'स्वभावाख्यानमुपमा--' इत्यादिना पञ्चत्रिंशदर्थालंकारा अभ्युपगता। पर तु 'ते चाद्यापि विकल्प्यन्ते कस्तान्कात्स्न्येन वक्ष्यति' इति परिगणनस्य प्रायिकत्वं तत्रैवाभिहितम्। रुद्रटस्तु 'अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः। एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः' इति प्राधान्येन चतुर एवालंकारानभ्युपगच्छति।" मम्मटः पुनः संसृष्टिसंकराभ्यां सह उपमादीनेकषष्टिमलंकारानभिप्रैति। सर्वस्वकारमते तु [1]द्वासप्ततिरर्थालंकाराः। कुवलयानन्दकारः परम् 'इत्थं शतमलंकारा लक्षयित्वा निदर्शिताः। प्राचामाधुनिकानां च मतान्यालोच्य सर्वतः' इत्युक्त्वा, रसवदादिकांश्चतुरः भावोदयादींस्त्रीन्, प्रमाणालंकारानष्टौ, संसृष्टिसंकरौ च द्वावङ्गीकरोतीत्याहृत्य तन्मते सप्तदशाधिकशतमर्थालंकारा इति सिध्यति। अर्वाचीनाश्च केचिन्मम्मटमतमाद्रियन्ते; अपरे च सर्वस्वसरणिम्, कतिपये च कुवलयानन्दरीतिम्। चमत्कारैकजीवातुत्वादलंकाराणां यत्र चमत्कारविशेष उपलक्ष्यते, तत्र भिन्न एवालंकार इत्यातिष्ठमानाः. अत्र चमत्कारभेदोऽस्ति नास्तीति विवादेन तत्र तत्रान्तर्भावं पार्थक्यं च स्वस्वानुभवबलेन स्वेच्छया वा स्थापयन्त्यर्वाचीना आलंकारिकाः। स्वस्वानुभवसाक्षिके शपथैकनिर्णयेऽस्मिन्विचारे पुनरस्मादृशामन्यतमपक्षावलम्बनं सर्वथा दुःशकमिति तत्तन्मताभिनन्दनमेव सांप्रतमिति प्रतिभाति। अर्थालंकारविषये च वामनादारभ्यैव प्राचामर्वाचां च लक्षणभेदेन एकस्य मते एकोऽलंकारः, स एव परस्य मते पर एव भवतीति [2]स्पष्टमिद विमर्शकानाम्।

पञ्चमे त्वधिकरणे वामनोऽयं द्वाभ्यामधिकरणाभ्यां काव्यसमयं शब्दशुद्धिं च निरूपयति। काव्यसमयनिरूपणं च नितरां संकुचित न खलु तद्व्यपदेशमर्हतीति प्रतिभाति। अर्वाचीनास्तु 'सतामप्यनुपनिबन्धः। असतां चोपनिबन्धः' इत्यारभ्य सुस्पष्टं बहून् काव्यसमयानभिदर्शयामासुः। शब्दशुद्धिविवेक-

1. अतिशयोक्तिभेदान्तरस्य गणने त्रयःसप्तति।

2. दृश्यन्तां वामनीयानि समासोक्त्यप्रस्तुतप्रशंसादिलक्षणानि।

प्रकरणे च प्रायेण वैयाकरणैः समर्थितान् शब्दान् तथैव समर्थयति । अगत्या च तत्र तत्र चिन्त्यतामप्याविर्भावयति । धातुपाठादिविषये च क्वचित्क्वचिदाधुनिक-वैयाकरणग्रन्थमताभ्यामस्ति दृश्यते वामनस्य विरोधः । आनुनामिकयप्रतिज्ञान्या-येन संप्रदायागतांस्तांस्तान्विशेषानतिदृढं विश्वसन्तो वयं न खल्वत्र किमपि का-रणमात्मना जानीमः । प्रायोगिकाधिकरणद्वितीयाध्यायस्य वैयाकरणकृत्यत्वमाक-लयन्तः प्रत्यवस्थातारः, काव्यशरीरशब्दशोधनमपि नालंकारिकस्य नानुगुणमिति परं निवेदनीया भवन्ति ।

अथास्य वामनस्य जीवितसमयं विमृशामः । अत्र केचित्— "अय ख्रिस्तीयसप्तमशतकोत्तरार्धान्न प्राचीनः ; यतोऽयं भवभूतिप्रणीतोत्तररामचरिता-दिश्लोकानुदाहृतवान् । भवभूतिः ख्रिस्तीयसप्तमशतकोत्तरार्धे कान्यकुब्जमही-पालस्य यशोवर्मणः सभायामासीदिति सुप्रसिद्धमेव । अथ च ध्वन्यालोकलोचने प्रथमोद्द्योते 'वामनाभिप्रायेणायमाक्षेपः । भामहाभिप्रायेण तु समासोक्तिरित्य-मुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरेकमेवोदाहरणं व्यतरद्ग्रन्थकृत्' इति वदन्तः श्रीमदाचार्याभिनवगुप्तपादा ध्वन्यालोककर्तुः श्रीमदानन्दवर्धनाद्वामनस्य प्राचीनत्वं प्रकटयन्ति । कश्मीरेषु अवन्तिवर्मराज्यसमये नवमशतकोत्तरार्धे श्री-मदानन्दवर्धन आसीदिति राजतरङ्गिण्या प्रतीयते । तस्मात् ख्रिस्ताब्दीयनवमश-तकोत्तरार्धान्नाधस्तनो वामनः । भाति चायं काश्मीरकः । अष्टमशतके कश्मीरमही-पतेर्विपश्चिद्वरस्य श्रीजयापीडस्य मन्त्री कश्चन वामनाभिध आसीत् । 'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः' इति राजतरङ्गिणी । स एवायं काव्यालकारसूत्रप्रणेतेत्यपि केचन काश्मीरका वदन्ति । काशिकावृत्तिकारो वामनस्त्वस्माद्भिन्नः प्राचीनश्च । चीनदेशात्तीर्थयात्रार्थं भार-तवर्षे सप्तमशतकपूर्वार्धे कश्चन ह्यून्सङ्गनामा पुरुषः समागतः । तदात्वे वामन-प्रणीतायाः पाणिनिसूत्रव्याख्यायाः (काशिकायाः) पठनपाठनेषु प्रचार आसी-दिति हि तदीययात्रावर्णनपुस्तकात्पाश्चात्त्यैः पण्डितैरधिगतम्" इति विलिखन्ति ।

परे त्वत्र प्रत्यवतिष्ठन्ते— चीनयात्रिकेण खलु तदा काशिकायाः प्रचार आसीदित्येव विलिखितम् ; न तु संपूर्णाया इति, न वा वामनप्रणीताया इति । तच्च तदीयं वचनं जयादित्यकृतं भागमादायैव कुतो नात्मलाभमधि-

गच्छतु। अत एव केचन विमर्शकाः[1] 'प्रायशः ख्रिस्ताब्दीये अष्टमे नवमे वा शतके काशिकावृत्तेः पूर्तिरासीदिति नवीनविचारणाविशारदानां मतम्' इत्यभिप्रयन्ति। नापि पूर्वोक्तेन लोचनवाक्यमात्रेण वामनस्य ध्वन्यालोककर्तुः प्राचीनत्वमभ्युपगन्तुं शक्यते; यत इयं शैली व्याख्यातॄणाम्— यत्स्वापेक्षया प्राचीनं मतं स्वव्याख्येयग्रन्थाभिप्रायादपि पूर्वत्वं प्रापय्य तत्र तत्रावतारिकादानभाववर्णनादिष्वप्रतिबन्धं प्रवर्तनं नाम। इदं चात्रालोचनीयम्, यदत्र वृत्तौ माघो भट्टनारायणश्च पद्याभ्यामुदाहृताविति। माघस्य च कालो नवमशतकोत्तरार्ध इति (८६०) डब्रूप्रभृतयो वदन्ति सहेतुकम्। भट्टनारायणश्च अष्टमशतकोत्तरार्धे नवमशतकारम्भे वा स्यादिति श्रीवैद्यप्रभृतिभिः सप्रमाणं निर्धारितम्। उदाहरणतया ग्रन्थकृद्भिरुपादानस्य च ग्रन्थावतारात्परं कतिपये वत्सरा अपेक्षणीया इति सर्वसंप्रतिपन्नमिदम्। ध्वन्यालोकलोचनकर्ता अभिनवगुप्तपादाचार्यश्च ख्रिस्तीयदशमशतकोत्तरभागे एकादशशतकारम्भे च कश्मीरेष्वासीदिति तत्कृतबृहत्प्रत्यभिज्ञाविमर्शनीसमाप्तिस्थपद्यादवगम्यत इति श्रीमान् दुर्गाप्रसादः। इत्थं च वामनोऽयं ख्रिस्तीयदशमशतकोत्तरार्धान्नार्वाचीनः. नवमशतकान्न प्राचीन इति प्रमाणमार्गागतमिति प्राहुः।

इदं च वयं विमर्शकानां दृष्टौ कुर्मः— काव्यादर्शकर्ता आचार्यदण्डी तावद्वामनादिभ्यः प्राचीन आलंकारिक इति निर्विवादमिदम्। तेन च काव्यादर्शे द्वितीयपरिच्छेदान्ते 'उपमारूपकं चापि रूपकेष्वेव दर्शितम्' इति, 'उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च' इति वदता 'तद्भेदावुपमारूपकोत्प्रेक्षावयवौ' इति वामनमतं निराकृतमिव प्रतिभाति। तत्कथमिदमुपपद्यताम्। वामनादन्येन च प्राचीनेनालंकारिकेण तावभ्युपगतौ स्यातामिति वा समूहनीयम। एवमपि प्राचीनेनालंकारिकेण खण्डितस्य विषयस्यार्वाचीनेन विनैव युक्तिप्रदर्शनमभ्युपगमव्यसनं कथं नाम संगच्छतामिति तु संशयः प्रादुर्भवति। परम्परवार्तानभिज्ञौ तौ ताविति कल्पनं त्वतिसाहसमेव सहृदयानाम।

अस्य च प्राचीनस्यालंकारनिबन्धनस्य नैतावता समीचीनं परिशोधितं मुद्रापणमासीत्। मूलमात्रं च चिराद्ब्रह्मोस्तैस्तैर्मुद्रापितमपि न व्युत्पित्सूनामुपकाराय तावते समकल्पत, वस्तुतो यावते भाव्यमेतेन। शोधकाश्च आलस्याद्वा

1. दृश्यता मद्रपुरमुद्रापितरूपावताराभूमिकासप्तमपुटः।

प्रमादाद्वा अन्यैर्वा कारणैः सूत्रवृत्तिविवेकमनाकलयन्त एव सूत्राणि वृत्तीर्वृत्तीश्च सूत्राणि तत्र तत्र विद्यार्थिभिर्विलिख्यमाना ग्रन्थाद्बहिर्भूताश्च टिप्पणीर्ग्रन्थाक्षराणि च मन्यमानास्तथैव मुद्रापयित्वा काव्यालंकारसूत्रवृत्तिमिमां प्राचीनां बहुधा आकुलयकार्षुः । तिप्पभूपालकृतव्याख्यानेन सह वृत्तिमिमां मुद्रापितवन्तश्च केचित् मुद्रितपूर्वमूलग्रन्थपाठादिप्रामाण्यभ्रमेण व्याख्याक्षराण्येवान्यथयन्तः, क्वचित्क्वचिच्च व्याख्यानपङ्क्तीरेव मुद्रितमूलग्रन्थविसंवादिनीः परित्यजन्तः, तत्रैव पुस्तके निर्दिष्टानि पाठान्तराणि व्याख्यानेन संवदन्तीत्यालोचयितुमप्यलसा बह्वाकुलयभावयन्भूयोऽपि वृत्तिमेनाम् । तदेतत्सर्वमालोच्य व्याख्यानग्रन्थस्यैव मूलग्रन्थस्याप्यादर्शान्तराण्यानीय व्याख्यामूलग्रन्थयोः संवादं सम्यक् परीक्ष्य व्याख्यानानुगुणं तत्र स्थितं पाठमादृत्य सयुक्तिप्रमाणं सूत्राणि वृत्तीश्च शृङ्गग्राहिकया निर्धार्य यावन्मतिबलं परिष्कारमाधाय सव्याख्यानामेनां काव्यालंकारसूत्रवृत्तिं बहिरिदानीमवतारयामः । यदि च व्युत्पित्सूनां विदुषां चायमस्मत्परिश्रमो विमर्शनावसरे लेशेनाप्यभिनन्दनमर्हति, तदा ससंतोषमस्मदीयप्रयासस्य चारितार्थ्यमाकलयामः ॥



॥ श्रीः ॥

# ॥ काव्यालंकारसूत्रवृत्तिः ॥

## ॥ कामधेनुसहिता ॥

## प्रथममधिकरणम् ॥

प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया ।
काव्यालंकारसूत्राणां स्वेषां वृत्तिर्विधीयते ॥

॥ श्रीः ॥

कल्याणानि करोतु नः स भगवान्क्रीडावराहाकृति-
दंष्ट्राग्रेण नवप्ररोहपुलकां देवीं धरामुद्वहन् ।
यस्याङ्गेषु वहन्ति लोमविवरालग्ना महाम्भोधयः
कान्तास्पर्शसुखादिव प्रकटितां स्वेदोदबिन्दुश्रियम् ॥ १ ॥

दरोन्मीलत्फालद्युतिमदमृतस्यन्दिशुभिकं
भ्रमन्मीनोष्णीषं पदसरणिपारीणवलयम् ।
विराजद्दंभावव्यतिकरितपुंभावसुभगं
पुरस्तादाविःस्ताद्भुवनपितरौ तन्मम महः ॥ २ ॥

ओंकारमणिघण्टानुरणन्निगमबृंहितम् ।
चित्ते शृङ्खलितं भक्त्या चिन्तये चिन्मयं गजम् ॥ ३ ॥

करुणामसृणालोकप्रवणा शरणार्थिषु ।
प्रगुणाभरणा वाणी स्मरणानुगुणास्तु मे ॥ ४ ॥

उन्मीलत्प्रतिभानकन्दमुदयत्संदर्भनालं लस-
च्छ्लेषाद्याकुलशब्दपत्रमतुलं बन्धारविन्दं सदा ।
अध्यासीनमलंक्रियापरिलसद्गन्धं वचोदैवतं
वन्दे रीतिविकासमाशु विगलन्माधुर्यपुष्पासवम् ॥ ५ ॥

नमस्कुर्वे खर्वेतरविविधविद्याविलसिता-
न्प्रवाचः प्राचोऽहं प्रथितयशसो भामहमुखान् ।
कृता यैरर्थानां कृतिषु नयचर्चा सदसतां
प्रभेवाभिव्यक्तिं प्रजनयति भासामधिपतेः ॥ ६ ॥

पावनी वामनस्येयं पदोन्नतिपरिष्कृता ।
गम्भीरा राजते वृत्तिर्गङ्गेव कविहर्षिणी ॥ ७ ॥

प्रबन्धं तालानां भवनुतिमिषेणातनुत यः
शिवाक्लृप्ताकारा नटनकरणानामपि भिदाः ।
स वृत्तेर्व्याख्यानं सरलरचनं वामनकृते-
र्विधत्ते गोपेन्द्रस्त्रिपुरहरभूपालतिलकः ॥ ८ ॥

पावनपदविन्यासा समग्ररसदोहशालिनी भजताम् ।
घटयति कामितमर्थं काव्यालंकारकामधेनुरियम् ॥ ९ ॥

यत्रोपयुज्यते यावत्तावत्तत्र निरूप्यते ।
प्रसङ्गानुप्रसङ्गेन नात्र किंचित्प्रपञ्च्यते ॥ १० ॥

अभ्यर्थके मय्यनुकम्पया वा साहित्यसर्वस्वसमीहया वा ।
मदीयमार्या मनसा निबन्धममुं परीक्षध्वममत्सरेण ॥ ११ ॥

अध्याये प्रथमे काव्यप्रयोजनपरीक्षणम् ।
अधिकारिविचारश्च द्वितीये रीतिनिश्चयः ॥ १२ ॥

काव्याङ्गकाव्यभेदानां तृतीये प्रतिपादनम् ।
तुर्ये पदपदार्थानां दोषतत्त्वविवेचनम् ॥ १३ ॥

वाक्यवाक्यार्थदोषाणां पञ्चमे तु प्रपञ्चनम् ।
गुणालंकारभेदस्तु षष्ठे शब्दगुणास्तथा ॥ १४ ॥

सप्तमेऽर्थगुणाः शब्दालंकाराः पुनरष्टमे ।
उपमा नवमे तस्याः प्रपञ्चो दशमे भवेत् ॥ १५ ॥

काव्यस्यैकादशे संविद्वादशे शब्दशोधनम् ।
इत्येष द्वादशाध्यायीप्रमेयाणामनुक्रमः ॥ १६ ॥

अथ ग्रन्थकारः स्वकर्तृकाणि सूत्राणि व्याकर्तुकामः, प्रारम्भ एव प्राचीनाचार्यपरंपरासमाचारपरिप्राप्तकर्तव्यभावेतिकर्तव्यताविशेषरूपमङ्गलानुष्ठानेन स्वयं प्रारिप्सितग्रन्थपरिसमाप्तिपरिपन्थिप्रत्यूहव्यूहप्रतिहननप्रगल्भसमग्रदेवतानुग्रह-

सपन्नोऽपि, व्याख्यातृश्रोतृणामविघ्नव्याख्यानश्रवणलाभाय ग्रन्थादौ तन्मङ्गलनिबन्धनपूर्वकं तत्प्रवृत्तिसिद्धये विषयप्रयोजनादि निर्दिश्य दर्शयन्नाद्येन पद्येन कर्तव्यं प्रतिजानीते—**प्रणम्येति**। भक्तिश्रद्धातिशयलक्षणः प्रकर्षः प्रशब्देनात्र प्रकाश्यते, तादृगेव हि मङ्गलमन्तरायसंतानशान्तिं संतनोति। अन्यथा कृतायामपि नतौ प्रारिप्सितग्रन्थपरिसमाप्तिं न संपादयेत्, किरणावल्यादौ तथा दर्शनात्। अथ कथमिह नमिः सकर्मकः स्यात्, प्रह्वीभाववृत्तेरस्याकर्मकत्वात् 'नमन्ति शाखा नवमञ्जरीभिः' इत्यादिप्रयोगदर्शनाच्च। न चायमुपसर्गवशात्सकर्मकः, प्रशब्दस्य प्रकर्षमात्रार्थत्वेन कर्मसंबन्धोपपादकत्वायोगात्; 'नमामि देवम्' इत्यादावुपसर्गस्याप्यभावात्। न चायमन्तर्भावितण्यर्थः, अनौचित्यप्रसङ्गादिति— तदेतत्पाणिनिफणितिपारायणपरिणतान्तःकरणानामस्माकं चेतसि चोद्यं न चातुरीमाचरति। तथा हि। यथा जयतिरकर्मकः प्रकर्षेण वर्तने, पराजये तु सकर्मकः; तथा नमिधातुः क्वचित्प्रह्वीभावार्थः, क्वचिन्नमस्कारार्थश्च भवति। तत्र यदा प्रह्वीभावमात्रविवक्षया प्रयुज्यते, तदानीमेषोऽकर्मकः। यदा नमस्कारार्थविवक्षया प्रयुज्यते, तदा सकर्मक इति विवेकः। यद्येव तर्हि 'देवं प्रणतः' इत्यत्र कर्तरि क्तप्रत्ययो न सिध्येत्, 'सकर्माकर्मकाद्धातोः क्तो भवेत्कर्मभावयोः' इति सकर्मकाद्धातोः कर्मणि क्तविधानात्, [1]गत्यर्थाकर्मकादिषु नमेः परिगणनाभावाच्चेत्यपि न चोदनीयम्। 'व्यवसितादिषु क्तः कर्तरि चकारात्' इतीहैव वक्ष्यमाणेन सूत्रेण नमेरपि कर्तरि क्तप्रत्ययसंभवात्। व्यवसितः प्रतिपन्न इत्यादिषु गत्यर्थादिसूत्रे चकारादनुक्तसमुच्चयार्थात्कर्तरि क्तप्रत्ययो भवतीति हि तस्य सूत्रस्यार्थः। परमं परिदृश्यमानज्योतिःपरिपाटीमतिवर्तमानम्। ज्योतिः चिन्मयम्। 'परमं ज्योतिः प्रणम्य' इत्यत्र वाक्यार्थसामर्थ्येन, निखिलनिगमनीरजराजिराजहंसस्य परमहंसभावनापदवीदवीयसः परस्य ब्रह्मणो यत्पारमार्थिकं रूपम्, तदेव प्रणिधानबलेन प्रमुषितविषयान्तरप्रसङ्गे प्रहर्षतरङ्गितेऽन्तःकरणे प्रत्यक्षतोऽनुभवन्प्रणामप्रचयेन पर्यचरदिति प्रतीतेः परमयोगित्वमस्य प्रबन्धुः प्रत्याय्यते। **वामनेनेति**। निजनामनिर्देशो यशःप्रकाशनाय। कवीन् प्रीणातीति कविप्रीः 'अन्येभ्योऽपि दृश्यते' इति क्विप्प्रत्ययः। तेन कविप्रियेति तृतीयान्तं कर्तृविशेषणम्, कवीनां प्रियेति प्रथमान्तं वा कर्मविशेषणम्। **काव्येति**। 'कवनीयं काव्यम्' इति

1. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च। ३-४-७२.

## काव्यं ग्राह्यमलंकारात् ॥ १ ॥

**काव्यं खलु ग्राह्यमुपादेयं भवति, अलंकारात्। काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते। भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते ॥**

लोचनकारः। 'कवयति इति कविः, तस्य कर्म काव्यम्' इति विद्याधरः। 'कौति शब्दायते विमृशति रसभावान् इति कविः तस्य कर्म काव्यम्' इति भट्टगोपालः। 'लोकोत्तरवर्णनानिपुणकविकर्म' काव्यम्' इति काव्यप्रकाशकारः। भामहोऽपि 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता। तदनुप्राणनाज्जीवेद्वर्णनानिपुणः कविः॥ तस्य कर्म स्मृतं काव्यम्' इति। तदेतत्काव्यशब्दव्युत्पत्तिकथनम्। चारुताशालिशब्दार्थयुगलं काव्यमिति रूढोऽर्थः। तस्य अलंकारः अलंकृतिः। भावे घञ्। दोषहानगुणालंकारादानाभ्यामाधीयमानं सौन्दर्यमिति यावत्। तत्प्रतिपादकानि सूत्राणि, तेषाम्। सूत्रलक्षणमुक्तं भामहेन, '[1]अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। सम्यक्संसूचितार्थं यत्तत्सूत्रमिति कथ्यते॥' इति। **स्वेषामिति**। सूत्रवृत्त्योरेककर्तृकत्वप्रतिपादनेन सूत्रकाराभिमतार्थप्रतिपादिनी वृत्तिः. वृत्तेरन्यकर्तृकत्वशङ्काविरहश्चेत्युभयमप्युपक्षिप्यते। वर्तते अस्यां'सूत्राणां यथावत्पदपदार्थविवेक इति वृत्तिः। अधिकरणार्थे क्तिन्प्रत्ययः। वृत्तिलक्षणमुक्तं भामहेन. 'सूत्रमात्रस्य या व्याख्या सा वृत्तिरभिधीयते।' इति। 'काव्यालंकारसूत्राणां वृत्तिः' इत्यनेन विषयसंबन्धौ सूचितौ। 'कविप्रिया' इत्यनेन अधिकारिप्रयोजने सूचिते। तदेतदनुबन्धचतुष्टयमुत्तरत्र विस्तरेण प्रतिपादयिष्यते।

ननु काव्यस्य कः पुनरलंकारादुपकारः, येन प्रतिज्ञायमानं तत्सूत्रवृत्तिविधानं सफलं स्यादिति शङ्कामपनेतुमलंकारप्रयोजनप्रतिपादकमादिमं सूत्रमुपादत्ते— **काव्यमिति**। खलु शब्दो वाक्यालंकारे। यद्वक्ष्यति 'वाक्यालंकारप्रयोजनं तु नानर्थकम्, यथा—खलु हि हन्त' इति। काव्योपादाननिदानत्वादलंकारो भवत्युपयोगीति भावः। ननु काव्यमेव तावदुपादेयं चेत्, अलंकारस्यापि तदुपादानहेतुत्वमुपपद्येत। तत्सूत्रवृत्तिविधानं च सफलं स्यात्। तस्योपादेयत्वमेव कुत इति चेत् — अत्र वक्त-

1. 'अल्पाक्षरमसंदिग्धं सारवत्सर्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥'

व्यम्—यत्काव्यमुपादेयं न भवतीति, तत्कस्य हेतोः? न तावदृषिप्रणीतत्वाभावादनुपादेयत्वम्, वाल्मीकिबोधायनप्रभृतिभिरपि महर्षिभिः काव्यस्य प्रणयनात्। नापि पुरुषप्रणीतत्वात्, शास्त्रनिबन्धनानामपि तथात्वेनानुपादेयत्वप्रसङ्गात्। न च काव्यत्वात्, रामायणादावनैकान्तिकत्वात्। तस्यापि पक्षसमत्वशङ्कायामेकैकाक्षरोच्चारणेऽपि [1]फलविशेषवचनविरोधः। नापि दृष्टप्रयोजनाभावात्, दृष्टप्रयोजनानां बहूनामुपदिष्टत्वात्। तथा चोक्तं काव्यप्रकाशे, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥' इति। नाप्यदृष्टप्रयोजनाभावात्, स्वर्गापवर्गलक्षणस्यादृष्टप्रयोजनस्य शिष्टैरनुशिष्टत्वात् यदाहुः, 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च। करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥' इति। काव्यादर्शेऽपि 'चतुर्वर्गफलायत्तं चतुरोदात्तनायकम्।' इति। इहापि 'काव्यं सत' इति वक्ष्यमाणत्वाच्च। अथ मन्यसे 'काव्यालापांश्च वर्जयेत्' इति निषेधवचनादनुपादेयत्वं काव्यस्येति, तदप्यनालोचितचतुरम्। काव्यालापनिषेधवचनस्यासत्काव्यविषयत्वेन व्यवस्थापनात्। यदाह विद्यानाथः, 'यत्र पुनरुत्तमपुरुषचरितं न निबध्यते तत्काव्यं परित्याज्यमेव। तद्विषया च स्मृतिः, काव्यालापांश्च वर्जयेदिति' इति। न केवलं विषयवैगुण्येनासाधुत्वं काव्यस्य, किंतु प्रबन्धुः प्रतिभादौर्बल्यकुलवैकल्याभ्यामपि भवति। तदुक्तं काव्यादर्शे, 'तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन। स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥' इति। कविगजाङ्कुशे, 'शुनीदुग्धमिव त्याज्यं पद्यं शूद्रकृतं बुधैः। गवामिव पयो ग्राह्यं काव्यं विप्रेण निर्मितम्॥' इति। उत्तमपुरुषकथाकथनं तु काव्यं ग्राह्यमेव। तदुक्तं भामहेन, 'उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसंपदः।' इति। भट्टोद्भटेनापि फणितम्, 'गुणालंकारचारुत्वयुक्तमप्यधिकोज्ज्वलम्। काव्यमाश्रयसंपत्त्या मेरुणेवामरद्रुमः॥' इति। भोजराजेनापि कथितम्, 'कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति। नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः॥' इति। किं बहुना। 'प्रतिपाद्यमहिम्' प्रबन्धप्रशस्तिरिति शास्त्राणामपि समानमेतत्। तथा हि। न्यायवैशेषिकशास्त्रयोरीश्वरप्रतिष्ठापकतया पूर्वोत्तरमीमांसयोर्धर्मब्रह्मप्रतिपादकतया च महनीयत्वम्। तत्त्वचिन्तायां तु शास्त्राणामपि काव्यमुखप्रेक्षितया कार्यकारित्वमित्युपनिषत्[1]। यदाहुः, 'स्वादुकाव्यरसोन्मिश्रं

[1] उपनिषत् रहस्यं सिद्धान्त इति यावत्। 'रसस्योपनिषत्परा' इति ध्वन्यालोके।

शास्त्रमप्युपयुञ्जते। प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥' इति। किंच शास्त्रकाव्ययोरियान्विशेषः, यत्प्रभुसंमिततया दुर्लभोऽनुप्रवेशः शास्त्रे, कान्तासंमिततया तु सुलभोऽनुप्रवेशः काव्य इति। यदाहुः, 'कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्। आह्लाद्यमृतवत्काव्यमविवेकगदापहम्॥' इति। साहित्यचूडामणावप्युक्तम्, 'तदिदं पुण्ड्रेक्षुभक्षणाद्वेतनवित्तलाभः, यत्काव्यश्रवणाद्व्युत्पत्तिसिद्धिः' इति। तस्माद्दृष्टादृष्टानेकोपकारकारितया काव्यमुपादातव्यम्, ततश्च सफलोऽयमलंकारसूत्रवृत्तिविधानयत्न इति सिद्धम्। अथ काव्यशब्दस्यानेकार्थत्वेन विप्रतिपत्तौ स्वसिद्धान्तसिद्धं मुख्यार्थं तावत्प्रख्यापयति— **काव्यशब्दोऽयमिति**। लिलक्षयिषितगुणालंकारसंस्कृतशब्दार्थयुगलवाची नपुंसकलिङ्गः काव्यशब्द इत्यर्थः। **गुणालंकारसंस्कृतयोरिति**। गुणैः ओजःप्रमुखैः, अलंकारैः यमकोपमादिभिश्च संस्कृतयोः अलंकृतयोरित्यर्थः। अत्र शब्दार्थौ द्वौ सहिताविव काव्यमिति काव्यपदार्थकथनात्, कमनीयताशाली शब्द एव काव्यम्, अथवा अर्थ एवेति पृथक्पक्षद्वयं प्रत्यक्षेपि; यतो द्वयोः संभूयाह्लादनिबन्धनत्वमिति। तदुक्तं वक्रोक्तिजीविते, 'न शब्दस्य रमणीयताविशिष्टस्य केवलस्य काव्यत्वम्, नाप्यर्थस्य' इति[1]। यद्यपि काव्यपदं गुणालंकारसंस्कृतशब्दार्थयुगलं स्वभावत

[1] अत्रेदमवधेयम्। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञात इत्यादिविश्वजनीनव्यवहारतः शब्दविशेषस्यैव काव्यपदार्थत्वम्। तथा च 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति तल्लक्षणं युक्तमिति पण्डितराजः। 'वाक्यं रसात्मकं काव्यम्' इति लक्षयन्दर्पणकृदप्येनमेव पक्षं कटाक्षयति। प्राचीनपक्षपातिनस्तु, अर्थस्यापि शब्दद्वारा प्रतीतिविषयत्वान्न पूर्वोक्तव्यवहारानुपपत्तिः। इत्थमेव हि आत्मश्रवणवाक्यं समर्थितं सर्वैः। इदं च काव्यत्वं न व्यासज्यवृत्ति, एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्याप्यापत्तेः। अर्थाज्ञानेऽपि शब्दावलीमात्रे काव्यत्वानुभवानुपपत्तेश्च। व्यासज्यवृत्तिधर्मप्रकारकनिश्चयस्य यावदाश्रयविषयकत्वनियमात्। नापि प्रत्येकपर्याप्तम्, एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः। शब्दानुपनिबद्धार्थतदनिबन्धकशब्दयोरतिव्याप्तेश्च। परं तु परस्परविशिष्टयोः शब्दार्थयोरेव काव्यत्वम्। तत्र च क्वचिच्छब्दविशिष्टोऽर्थः, क्वचित्त्वर्थविशिष्टः शब्दः काव्यमिति बोध्यम्। न त्वेकश्लोक एव द्विधा काव्यत्वम्, एकधा काव्यत्वेनैव व्यवहारोपपत्तेः। यत्रार्थी व्यञ्जना, तदभावेऽप्यर्थालंकारमात्रं वा; तत्रार्थो विशेष्यः। यत्र तु शाब्दी व्यञ्जना, तदभावेऽपि शब्दालंकारमात्रं वा, तत्र शब्दो विशेष्य इत्येव विनिगमनावधेया। उभयालंकारसत्त्वे तु तत्तच्चमत्कारतारतम्यं विनिगमकमवसेयमिति प्राहुः।

**कोऽसावलंकार इत्यत आह—**

**सौन्दर्यमलंकारः ॥ २ ॥**

**अलंकृतिरलंकारः । करणव्युत्पत्त्या पुनरलंकारशब्दोऽयमुपमादिषु वर्तते ।**

एवाचष्टे, तथाप्यस्मिन्सूत्रे मुख्यार्थस्यानुपयोगलक्षणं बाधं पश्यन् शब्दार्थयुगलमात्रे तदुपचर्यत इत्याह—**भक्त्येति**। [1]भक्त्या उपचारेण । गुणालंकारसंस्कृतत्वस्य पृथक्करणं मात्रचोऽर्थः । ननु 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥' इत्युक्तरीत्या मुख्यार्थबाधादौ सत्येवोपचारो वक्तव्यः । तथा च 'गुरुरभिवाद्यो गुरुत्वात्' इत्यत्र यथा गुरुशब्दपरिगृहीतस्यैव गुरुत्वस्य तदभिवादनहेतुत्वं दृष्टम्, तथैव अत्रापि अलंकारस्य काव्यग्रहणहेतुत्वमुपपद्यत इति कथं मुख्यार्थबाधः । चारुताशालिशब्दार्थयोः, शब्दार्थमात्रस्य च वस्तुत एकत्वाद्भेदनिबन्धनो दुर्घटः संबन्धः । 'काव्यं ग्राह्यमलंकारात्' इति भेदनिर्देशेनैव गुणालंकारवैशिष्ट्यं तद्व्युत्पत्तिरूपं प्रयोजनं च संभवतीति कथमुपचारः? अत्रोच्यते—'यथा गुरुत्वादभिवाद्यः' इत्युक्ते गम्यत एव गुरुरिति, तथापि गुरुरित्युच्यमानमतिरिच्यते; एवमिहापि 'अलंकाराद्ग्राह्यम्' इत्युक्ते काव्यमिति गम्यत एव, तथापि काव्यमित्युच्यमानमतिरिच्यत इति पुनरुक्तप्रायत्वादनुपयुक्तमिति मुख्यार्थभङ्गः। न च अनुपयुक्तत्वेऽप्यनुपपत्तेरभावात्कथं मुख्यार्थबाध इति चोदनीयम् । यतो योग्यताविरहवत् आकाङ्क्षाविरहोऽपि मुख्यार्थभङ्गहेतुः, अन्वयविघटनाविशेषात् । ततश्चानुपयुक्तावाकाङ्क्षावैकल्यम्, अनुपपत्तौ तु योग्यतावैकल्यमित्यवगन्तव्यम्। चारुताशालिशब्दार्थयोः शब्दार्थमात्रस्य च गुणभेदाद्भेदे सति सादृश्यलक्षणः संबन्धः । गुरुपदोपलक्षिते पुंसि हितानुशासनकौशलादिप्रतिपत्तिवत्, शब्दार्थयोर्गुणालंकारवैशिष्ट्यप्रतिपत्तिः प्रयोजनं च संभवतीत्युपपन्न एवोपचार इत्यलमतिविस्तरेण ॥

अलंकारशब्दोऽयं किं [2]भावसाधनः, उत करणसाधन इति संदेहात्पृच्छति—**कोऽसाविति**। तत्रोत्तरं वक्तुमुत्तरसूत्रमवतारयति—**अत आह**-

1. 'भज्यते सेव्यते मुख्यार्थोऽनयेति भक्तिः उपचारः लक्षणेत्यर्थः ।'
2. साधन प्रत्यय । भावसाधनः भावार्थकप्रत्ययान्तः ।

ति । वृत्तिकारदशातः सूत्रकारदशान्यैवेति कर्तृभेदमाश्रित्योक्तम् 'आह' इति । अत्र भावव्युत्पत्तेर्विवक्षितत्वादलंकारशब्दो भावार्थमाचष्ट इत्याह—**अलंकृतिरलंकार इति** । अलंकारशब्दस्य करणव्युत्पत्तिपक्षे तु न गुणानां काव्यग्रहणहेतुत्वमिति, 'युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणम्' इत्यादि वक्ष्यमाणं नोपपद्यत इत्यर्थासंगतिः, 'न क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिरिष्यते' इति करणे ल्युट एव प्राप्तेः शब्दासंगतिश्चेत्याशयः । ननु अलंकारशब्दस्य कटकमुकुटादाविव यमकोपमादिष्वविगीतशिष्टप्रयोगदर्शनात् '[1]अध्यायन्याय' इत्यादिसूत्रे चकारादनुक्तसमुच्चयार्थाद्वा 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाद्वा करणसाधनोऽप्यलंकारशब्दः संगच्छत इति चेन्मतम्, तत्तु नानिष्टमित्यभ्युपगम्यानुवदति—**करणव्युत्पत्त्या पुनरिति** । कथंचित्कल्पितायामपि करणव्युत्पत्तौ न गुणानां काव्यग्रहणहेतुत्वमिति स दोषस्तदवस्थ इत्याशयः । ननु करणसाधनोऽयमलंकारशब्दो यमकोपमादिषु वर्तमानो गुणानपि गृह्णाति, सौन्दर्यहेतुत्वाविशेषादुभयेषामिति— तदेतदविचारितरमणीयम् । न हि व्युत्पत्तिरस्तीति शब्दः सर्वत्र प्रयोक्तुं शक्यते, किंतु शिष्टप्रयोगे दृष्टे व्युत्पत्तिरन्विष्यते, अन्यथा पङ्कजादयः शब्दाः पद्मादिष्विव कुमुदादिषु प्रयुज्येरन्, पङ्कजननाविशेषादिति स्यादतिप्रसङ्गः । तस्मात्पद्मादिषु पङ्कजादिशब्दवत्, अलंकारशब्दः कटकमुकुटादिष्विव यमकोपमादिषु योगरूढ इत्यवगन्तव्यम् । एवं च सति यमकोपमादेरलंकारस्य काव्यग्रहणहेतुत्वाभ्युपगमे, सालंकारमेव काव्यं ग्राह्यम्, न तु निरलंकारमित्यापद्येत । न चैवं वक्तुं युक्तम्, अलंकारविरहेऽपि शुद्धगुणमेव काव्यमास्वाद्यमिति वक्ष्यमाणत्वात् । न केवलमियमस्य ग्रन्थकृतः प्रक्रिया, अन्यैरप्यालंकारिकैरनलंकारस्य शब्दार्थयुगलस्य सगुणस्य काव्यत्वे लक्षणोदाहरणयोर्दर्शितत्वात् । तथा चोक्तं काव्यप्रकाशे, 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति । अत्र व्याचष्ट भट्टगोपालः, "निर्दोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यमिति घण्टापथः । किंतु 'सर्वं वाक्यं सावधारणम्' इति युक्त्या यथा दोषशून्यावेव गुणवन्तावेव शब्दार्थौ काव्यमित्यवधारणम्, तथा सालंकारावेवेति न पार्यते नियन्तुम् । वयं हि काव्यशोभासंभावनया स्वैरमलंकारान् सहामहे, अलंकारनैयत्यं तु न सहामहे । उक्तं हि, 'दोषहानं गुणादानं

1. अध्यायन्यायोद्यावसहाराश्च । ३-३-१२२.

## स [1]दोषगुणालंकारहानादानाभ्याम् ॥ ३ ॥

**स खल्वलंकारो दोषहानात्, गुणालंकारादानाच्च संपाद्यः कवेः।**

कर्तव्यं नियमात्कृतौ। कामचारः पुनः प्रोक्तोऽलंकारेषु मनीषिभिः॥' इति। उदाहरणं तु 'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः। सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥' इति। अत्र स्फुटो न कश्चिदलंकारः[2]। काशकुशावलम्बनाद्विशेषोक्तिविभावनयोरन्यतरालंकारोद्भावनायामलंकारनैयत्यपक्षनिर्वाह इत्यलं दूराभिनिवेशया दुराशया, कविसंरम्भगोचराणामलंकाराणां न कस्यचिदुपलम्भ इति।" तथापि न काव्यत्वभङ्गः। विशेषोक्तिविभावनयोः स्वस्वविरुद्धार्थमुखेन कथंचिदुद्भावनेऽपि न [3]स्फुटत्वम्, कण्ठोक्त्या निषेध्ययोः कार्यकारणयोर्भावान्तरमुखेनाभावाभिधानात्। अथ साधकबाधकप्रमाणाभावाद्द्वयोः संदेहरूपसंकर एवेति, तत्राप्यस्फुटतानुवृत्तिर्दुष्परिहरैवेत्यलं प्रसक्तानुप्रसक्तार्थप्रपञ्चनेन। यद्यपि 'काव्यं ग्राह्यं सौन्दर्यात्' 'तद्दोषगुणालंकारहानादानाभ्याम्' इति विन्यासान्तरे लाघवं भवति। तथापि, योऽयमलंकारः काव्यग्रहणहेतुत्वेन उपन्यस्यते, तद्व्युत्पादकत्वाच्छास्त्रमपि अलंकारनाम्ना व्यपदिश्यत इति शास्त्रस्य अलंकारत्वेन प्रसिद्धिः प्रतिष्ठिता स्यादिति सूचयितुमयं विन्यासः कृतः, 'काव्यं ग्राह्यमलंकारात्' इति।

इत्थमलंकारपदार्थं समर्थ्य तस्य कारणं वक्तुमुत्तरसूत्रमुपक्षिपति—**स दोषेति**। प्रक्रान्तप्रसिद्धानुभूताद्यनेकार्थत्वात्तच्छब्दोऽत्र प्रक्रान्तार्थपरामर्शीत्याह—**स खल्विति**। गुणाश्चालंकाराश्च गुणालंकारा इति प्रथमं समस्य, पश्चात् दो-

1 अत्र दोषपदेन रसप्रतिबन्धकानां प्रतिकूलवर्णश्रुतिकटुकद्यानां शाब्दबोधसामग्रीविघटकानां च्युतसंस्कृतिक्लिष्टाभवन्मतयोगानामेव ग्रहणम्। ए, ए, च काव्यत्वविघटकाः; अन्ये तु काव्यापकर्षका एवेत्यर्वाचीनाः। 2 विभावनाविशेषोक्त्योः, तत्संदेहसंकरस्य च अस्फुटत्वं ग्रन्थकृतैव दर्शयिष्यते। सविसर्गगुरुरेफानुप्रासोऽपि रसाननुगुणत्वादस्फुटः। न च प्रकृते विप्रलम्भशृङ्गाररसप्रतीते रसवदलंकार एव स्फुट इति वाच्यम्। रसस्यात्र प्राधान्यात्; अप्राधान्य एवालंकारत्वोपगमात्। 3. विशेषोक्तिविभावनयोः स्फुटत्वं नाम कार्यकारणाभावयोः साक्षाच्छब्दोल्लिखितत्वम्।

**शास्त्रतस्ते ॥ ४ ॥**

ते दोषगुणालंकारहानादाने शास्त्रादस्मात् । शास्त्रतो हि ज्ञात्वा दोषाञ्जह्यात् · गुणालंकारांश्चाददीत ।

किं पुनः फलमलंकारवता काव्येन, येनैतदर्थोऽयं यत्न इत्यत आह—

**काव्यं सद्दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात् ॥ ५ ॥**[1]

षाश्च गुणालंकाराश्चेति द्वन्द्वः कर्तव्यः । हानं च आदानं च हानादाने । दोषगुणालंकाराणां हानादाने इति विग्रहः । ततश्च दोषाणां हानम्, गुणालंकाराणामादानमिति यथासंख्य संबन्धः संपत्स्यते । 'इष्टानुवर्तनात्कुर्यात्प्रागनिष्टनिवर्तनम् ।' इति नीत्या गुणालंकारादानात् पूर्वं दोषहानमेव कविना कर्तव्यमिति सूचयितुं दोषहानस्य प्रथमतो निर्देशः कृतः । 'गुणालंकारादानाच्च' इत्यत्रेदमनुसंधेयम्—गुणविवेचनाधिकरणप्रमेयपर्यालोचनायां नित्यत्वानित्यत्वभेदेन गुणालंकारव्यवस्थामास्थास्यमानेन ग्रन्थकृता. अत्र सूत्रे दोषहानवत् गुणादानवच्च नालंकारादानं नियतम्; किंतु गुणकृतशोभातिशयाधायकत्वसभावनयैवेति विवक्षितम्—इति। एवं च सति 'सौन्दर्यमलंकारः' इत्यत्रापि. या गुणैराधीयते शोभा, यश्चालंकारैस्तदतिशयः. तदुभयमपि सौन्दर्यपर्यायेण अलंकारपदेन संगृहीतमिति व्याख्येयम् । अतो न पूर्वापरप्रमेयविरोध इति सर्वमनवद्यम् । **कवेरिति ।** 'कृत्यानां कर्तरि वा' इति षष्ठी ।

ननु दोषहानगुणालंकारादाने किंनिबन्धने इति जिज्ञासमान प्रत्याह—**शास्त्रत इति ।**

ननु सालंकार काव्यं फलवच्चेत्; अलंकारस्य निरूपणाय शास्त्रारम्भ उपपद्यते । अतस्तदुपपत्तये फलं वक्तव्यम् । किं पुनस्तत्फलमिति प्रश्नपूर्वकमुत्तरसूत्रमुपन्यस्यति— '**किं पुनरिति** । सच्छब्दस्य विवक्षितमर्थमाह—

1. 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥'

**काव्यं सत् चारु दृष्टप्रयोजनम्, प्रीतिहेतुत्वात्। अदृष्टप्रयोजनम्, कीर्तिहेतुत्वात्। अत्र श्लोकाः—**

**'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः।**
**अकीर्तिवर्तनीं त्वेवं कुकवित्वविडम्बनाम्॥**

**कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः।**
**अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम्॥**

**चार्विति**। सालंकारतया सुन्दरमित्यर्थः। दृष्टादृष्टौ ऐहिकामुष्मिकौ अर्थौ यस्येति विग्रहः। अत्र यथासंख्यं संबन्धं दर्शयति— **दृष्टप्रयोजनमिति**। अत्र प्रीति-शब्देन श्रवणसमनन्तरमेव सहृदयहृदयेषु जायमाना या रसास्वादलक्षणा, या च पुनरिष्टप्राप्त्यनिष्टपरिहारनिबन्धना, सेयमुभयविधा प्रीतिर्विवक्षिता। तथा च सति, साक्षात्परंपरया चैहिकप्रीतेः साधनत्वात्काव्यं दृष्टार्थमित्यर्थः। ननु कीर्ति-रपि स्वर्गसाधनतया प्रयोजनमिति वक्तव्यम्। स्वर्गपदार्थोऽपि प्रीतिरेव। तथा च सति, प्रीतिहेतुत्वादित्युक्ते विवक्षितार्थसिद्धेः किं हेत्वन्तरोपादानगौरवेणेति चेत्, सत्यम्। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्॥' इत्युक्तलक्षणाया दृष्टप्रीतिविलक्षणाया अदृष्टप्रीतेः पृथङ्-निरूपणीयत्वात्काव्यस्य तन्मूलतया लोकातिशयवत्त्वं प्रकटितमिति हेत्वन्तरमुपात्त-मिति द्रष्टव्यम्।

अमुमेवार्थमन्वयव्यतिरेकाभ्यामभियुक्तोक्तिसंवादेन समर्थयते—

**अत्र श्लोका इति**। प्रतिष्ठा सहृदयहृदयानुरञ्जकतया लोकोत्कर्षेण स्थितिः। सरणिः पद्धतिः। 'अकीर्तिवर्तनीम्' इत्यत्र नञ् तद्विरोधिनमर्थमुपचष्टे। यथा, अनृताधर्माविद्यादयः ऋतधर्मविद्यादीनां प्रतिपक्षाः, तथा अकीर्तिरपि कीर्तेर्विरोधिनी; तस्या वर्तनी एकपदी। 'सरणिः [illegible] पद्या वर्तन्येक-पदीति च।' इत्युभयत्राप्यमरः। आसंसारं यावन्न मोक्षः, कीर्तेर्यावत्प्र-सरणं वा। निरालोकः तेजोमात्रशून्यः, तमोमय इति यावत्। नरकः दुर्गतिः। 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्।' इत्यमरः। तस्य उद्देशः प्रदेशः, तस्य दूतिका प्रापयित्रीति यावत्। प्रसाद्यः विशेषतो विमर्शेन विशदीकर्तव्यः।

**तस्मात्कीर्तिमुपादातुमकीर्तिं च व्यपोहितुम्।**
**काव्यालंकारशास्त्रार्थः प्रसाद्यः कविपुंगवैः ॥**

इति काव्यालंकारसूत्रवृत्तौ शारीरे
**प्रथमेऽधिकरणे प्रथमोऽध्यायः ।**

अस्यालंकारशास्त्रस्य सौन्दर्यापरपर्याये अलंकारे परमप्रतिपाद्ये साक्षात्प्रति-पाद्यत्वेन दोषगुणालंकारा विषयाः, हेयोपादेयतया तद्व्युत्पादनं प्रयोजनम्, तस्य च प्रयोजनं सत्काव्यकरणम्, तस्य च कीर्त्यादयः, तत्र कवीनां प्रीतिः। शास्त्रस्य विषयस्य च प्रतिपाद्यप्रतिपादकभावः संबन्धः; काव्यस्य कीर्त्यादेश्च कार्यकारण-भाव इति प्रथमाध्यायप्रमेयसंग्रहः ।

**शारीर इति ।** प्रथमं काव्यशरीरम्, तदनु दोषाः, ततो गुणाः, तदन-न्तरमलंकाराः, ततः शब्दप्रयोगशैलीति क्रमेण पञ्चाधिकरणानि । तत्र काव्यश-रीरमधिकृत्य कृतमिति शारीरमधिकरणम् । अधिक्रियन्तेऽवान्तरप्रमेयरूपाणि प्रकरणान्यस्मिन्महाप्रमेयात्मनीत्यधिकरणं[1] प्रमेयविरतिस्थानम्। अध्याय अवान्त-रप्रमेयविरामस्थानम् । 'प्रमेयविरतिस्थानमध्यायश्च प्रपाठकः ।' इति वैजयन्ती।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति-
व्याख्यायां काव्यालंकारकामधेनौ शारीरे
**प्रथमेऽधिकरणे प्रथमोऽध्यायः ॥**



1. 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' इति त्वन्यत्र दृश्यते ।

# द्वितीयोऽध्यायः ॥

प्रयोजनस्थापना । अधिकारिनिरूपणार्थमाह-

**अरोचकिनः सतृणाभ्यवहारिणश्च कवयः ॥ १ ॥**

**इह खलु द्वये कवयः संभवन्ति—अरोचकिनः, सतृणाभ्यवहारिणश्चेति । अरोचकिसतृणाभ्यवहारिशब्दौ गौणार्थौ । कोऽसावर्थः ? विवेकित्वमविवेकित्वं चेति ।**

कवीन्द्रकैरवानन्दसुधास्यन्दपटीयसीम् ।
विभिन्दानां तमःस्पन्दं वन्दे वाङ्मयचन्द्रिकाम् ॥

प्रयोजने काव्यस्य प्रतिष्ठापिते तदर्थितया अधिकारिणो निरूपणीया इत्यध्यायद्वयसंगतिमधिगमयति— **प्रयोजनेति** । काव्यप्रयोजनस्य स्थापना, कृतेति शेषः । तिष्ठतेर्ण्यन्तात् 'ण्यासश्रन्थो युच्' इति युच्प्रत्ययः । **अधिकारीति** । अधिकारः प्रयोजनस्वाम्यम्, तद्वान् अधिकारी । तदुक्तं दशरूपके 'अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः ।' इति । **अरोचकिन इति** । कृष्णसर्पपदन्यायेन अरोचकशब्दस्तत्पुरुषमेवावगमयतीति 'कृष्णसर्पवदरण्यम्' इतिवत् 'अरोचकिनः' इति प्रयुक्तं न त्वरोचका इति । अतः 'न कर्मधारयान्मत्वर्थीयः' इति निषेधस्यानवकाशः । अरोचको नाम व्याधिविशेषः । यदाह वाग्भटः, 'अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रितैः ।' इति । सतृणमिति, 'अव्ययं विभक्ति' इत्यादिना साकल्यार्थेऽव्ययीभावः । सतृणमभ्यवहरन्तीति सतृणाभ्यवहारिणः । **द्वय इति** । 'प्रथमचरम' इत्यादि सूत्रे तयपः परिगणनात्, 'द्वित्रिभ्यां तयस्यायज्वा' इति तत्स्थानिकायजोऽपि स्थानिवद्भावात्सर्वनामसंज्ञां भजते; अतः प्रथमाबहुवचनान्तं 'द्वये' इति रूपम् । **ननु किमनेन प्रकृतानुपयोगिना अरोचकित्वादिविचारेणेति चेदत आह— अरोचकीति । गौणार्थाविति** । सादृश्यमूलकलक्षणाव्यापारेण लक्षितार्थावित्यर्थः । गौणार्थस्वरूपं जिज्ञासुः पृच्छति—**कोऽसाविति** । पृष्टमर्थं स्पष्टमाचष्टे—**विवेकित्वमिति** ।

यदाह—

**पूर्वे शिष्या विवेकित्वात् ॥ २ ॥**

पूर्वे खल्वरोचकिनः, शिष्याः शासनीयाः । विवेकित्वात् विवेचनशीलत्वात् ।

**नेतरे तद्विपर्ययात् ॥ ३ ॥**

इतरे सतृणाभ्यवहारिणः, न शिष्याः । तद्विपर्ययात् अविवेचनशीलत्वात् । न च शीलमपाकर्तुं शक्यम् ।

नन्वेवं न शास्त्रं सर्वानुग्राहि स्यात्, को वा मन्यते? तदाह—

**न शास्त्रमद्रव्येष्वर्थवत् ॥ ४ ॥**

उक्तस्य गौणार्थस्य उपपादकमधिकारिनिश्चायकं सूत्रमवतारयति । **यदाहेति** । अथ 'नेतरे' इति सूत्रारम्भ. किमर्थं । विवेकिनः शिष्या इत्युक्ते अविवेकिनः पुनरशिष्या इति गम्यत एव. तथाप्यासूत्र्यमाणं पुनरुक्तिं पुष्णाति : 'अर्थादापन्नस्य पुनर्वचनं पुनरुक्ति' इति न्यायादिति—सत्यम्—यथा 'धूमध्वजाभावे धूमाभावः' इति यावद्व्यतिरेको न दर्शितः. तावत् 'सति धूमध्वजे धूमः' इति साहचर्यमात्रदर्शनान्न कार्यकारणाभावनिश्चयः; तथैवात्रापि व्यतिरेकदर्शनमन्वयदार्ढ्यायेति युज्यत एव सूत्रारम्भ. । वृत्तिः स्पष्टार्था ।

ननु शीलित शास्त्रमविवेकमपाकरोति. तत्त्वविवेकस्य तज्जन्यत्वात् । अतः कथमविवेकिनो न शिष्या इति शङ्कां शकलयति— **न चेति** ।

यद्येवं विरलस्तर्हि विद्योपयोग इति शङ्कते— **नन्विति** । अभ्युपगमेन परिहरति— **को वा मन्यत इति** । शास्त्रं सर्वानुग्राहीत्यनुषज्यते । न कश्चिदपि तथा मन्यत इति फलितोऽर्थः ।

विधीयमानोऽपि विवेकविधुरेषु विद्योपदेशो विपिनविलापवद्विफल इत्याह— **न शास्त्रमिति** । शास्त्रोपदेशद्वारा यत्र सद्भिराधीयमाना गुणाः संक्रामन्ति

**न खलु शास्त्रं अद्रव्येषु अविवेकिषु अर्थवत् ।**

**निदर्शनमाह—**

**न कतकं पङ्कप्रसादनाय ॥ ५ ॥**

**नहि कतकं पयस इव पङ्कस्य प्रसादनाय प्रभवति ।**

**अधिकारिणो निरूप्य रीतिविनिश्चयार्थमाह—**

**[1]रीतिरात्मा काव्यस्य ॥ ६ ॥**

**रीतिर्नामेयमात्मा काव्यस्य । शरीरस्येवेति वाक्यशेषः ।**

तद्द्रव्यमिह विवक्षितम् । तद्विपरीतान्यद्रव्याणि गुणहीना अविवेकिन इति यावत् । अत्र गाथा, 'अयं भस्मनि होमः स्यादियं वृष्टिर्मरुस्थले । इदमश्रवणे गानं यज्जडे शास्त्रशिक्षणम् ॥' इति ।

प्रतिपादितं प्रमेयं प्रसिद्धदृष्टान्तेन स्पष्टयितुमाह— **निदर्शनमिति** । कतकं अम्भःप्रसादनबीजम् । 'कतकं मेदनीयं च श्लक्ष्णं वारिप्रसादनम् ।' इति वैद्यनिघण्टुः ।

प्रकरणोचितां संगतिं प्रकटयन्नुत्तरसूत्रमवतारयति—**अधिकारिण इति** । कर्तृनिरूपणानन्तरं कर्मनिरूपणमुचितमिति संगतिः । व्याचष्टे— **रीतिर्नामेति** । रिणन्ति गच्छन्ति अस्यां गुणा इति, रीयते क्षरत्यस्यां वाङ्मधुधारेति वा रीतिः । अधिकरणार्थे क्तिन्प्रत्ययः । करङ्कगात्रकल्पकर्कशतर्कवाक्यवैलक्षण्यप्रक-

1. 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इत्यानन्दवर्धनः । 'शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम्' इति विद्यानाथः । 'वा[illegible]ग्यप्रधानेऽपि रस एवात्र जीवितम्' इत्यग्निपुराणम् । 'काव्यस्यात्मनि सङ्गिनि रसादिरूपे न [illegible]स्यचिद्विमतिः' इति व्यक्तिविवेकः । 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इति काव्यप्रकाशः । 'अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा । औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्' इति क्षेमेन्द्रः । 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारः । एतद्गदसाधुत्वादिविचारस्तु वृत्तिवार्तिकव्याख्याने कृतोऽस्माभिः ।

किं पुनरियं रीतिरित्यत्राह—

**विशिष्टा पदरचना रीतिः ॥ ७ ॥**

विशेषवती पदानां रचना रीतिः ।

कोऽसौ विशेष इत्यत आह—

**विशेषो गुणात्मा ॥ ८ ॥**

वक्ष्यमाणगुणरूपो विशेषः ।

---

टनप्रगल्भस्फुरत्ताहेतुः कश्चन स्वभावोऽस्यात्मेत्युच्यते[1] । ननु काव्यस्य आत्मेत्ये-तत् कथमुपपद्यते ; अशरीरभूतस्य आत्मावच्छेदकत्वासंभवादित्याशङ्क्य, शब्दार्थयुगल शरीरम्, तस्याधिष्ठाता रीतिर्नाम आत्मेत्युपपत्तिमुन्मीलयितुम् आकाङ्क्षितं पदमापूरयति—**शरीरस्येवेति वाक्यशेष** इति । अत्र रीतेरात्मत्वमिव, शब्दार्थयुगलस्य शरीरत्वमौपचारिकमिति मन्तव्यम् ।

रीतेः काव्यशरीरं प्रत्यात्मत्वेनोक्तमुत्कर्षमुपश्रुत्य, कौतुकोत्कलिकाकरम्बितान्त.करणस्तां प्रतिपित्सुः पृच्छति— **किं पुनरिति** । किमित्यव्ययं प्रश्नार्थे । ‘किमव्ययं च.कुत्सायां विकल्पप्रश्नयोरपि ।’ इति नानार्थरत्नमाला । इयं रीतिर्नाम किं पुनः किंलक्षणेत्यर्थः । प्रतिपित्सितमर्थ प्रतिपादयितुमनन्तरसूत्रमवतारयति—**आहेति** । ‘विशिष्टा ’ इति पद व्याचष्टे—**विशेषवतीति** । **पदानामिति** । अर्थेष्वौपचारिकी रीतिरङ्गीकर्तव्या; अन्यथा अर्थानामात्मभूतरीतिवैधुर्ये काव्यशरीरान्तःपातो दुष्करः । यद्वक्ष्यति, ‘तस्यामर्थगुणसंपदास्वाद्या’ ‘सापि वैदर्भी तात्स्थ्यात्’ इति ।

किमयं वैशेषिकपरिभाषितः पञ्चमः पदार्थो विशेषः, अन्यो वेति संदिहानः पृच्छति—**कोऽसाविति** । विवक्षितं विशेषं विवरीतुं सूत्रमवतारयति—**आहेति** । गुणात्मा ओजःप्रसादादिगुणस्वभाव इत्यर्थः ।

---

1 .एतेन ‘यत्तु वामनेनोक्तम्, रीतिरात्मा काव्यस्येति—तन्न । रीतेः सघटनाविशेषत्वात्, सघटनायाश्चावयवसस्थानरूपत्वात्, आत्मनश्च तद्भिन्नत्वात्’ इति दर्पणोक्तिः प्रत्युक्ता ।

## सा त्रेधा वैदर्भी गौडीया पाञ्चाली चेति ॥ ९ ॥

सा चेयं रीतिस्त्रिधा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति।

किं पुनर्देशवशाद्द्रव्यवद्गुणोत्पत्तिः काव्यानाम्, येनायं देशविशेषव्यपदेशः? नैवम्। यदाह—

## विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥ १० ॥

विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात्देशसमाख्या। न पुनर्देशैः किंचिदुपक्रियते काव्यानाम्।

तासां गुणभेदाद्भेदमाह—

## समग्रगुणोपेता वैदर्भी ॥ ११ ॥

समग्रैः ओजःप्रसादप्रभृतिभिः गुणैः उपेता वैदर्भी नाम रीतिः।

अत्र श्लोकः—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्भिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥'

रीतिं विवेक्तुमाह— **सा त्रेधेति**। सकलगुणसध्रीचीनत्वेनाभ्यर्हितत्वाद्वैदर्भ्याः प्रथमं निर्देशः। अनन्तरयोरुभयोः स्तोकगुणत्वेऽपि प्रशस्तगुणसंस्कृतत्वादनन्तरं गौडीयायाः, अवशिष्टाया अन्ते निवेशः।

**किं पुनरिति**। यथा लवणादयः पदार्थाः सिन्ध्वादिदेशवशाद्विशिष्टगुणा भवन्ति, तथा किं देशवशाद्विशिष्टानि काव्यानीति शङ्कार्थः। समाधत्ते—**नैवमिति**। विदर्भादिपदैरुपचाराद्विदर्भादिदेशस्थाः कवयो वक्ष्यन्ते; अन्यथा विदर्भादिपदानां क्षत्रियवृत्तित्वे अर्थासंगतिः, जनपदवृत्तित्वे 'जनपदतदवध्योश्च' इति गौडशब्दात् 'अवृद्धादपि बहुवचनविषयात्' इति विदर्भपञ्चालशब्दाभ्यां च वुञ्प्रत्ययप्राप्तौ शब्दासंगतिश्चेत्यनुसंधेयम्। विदर्भपञ्चालशब्दाभ्यां 'शेषे' इत्यण्प्रत्ययः, गौडशब्दात् 'वृद्धाच्छः' इति छप्रत्ययः। स्पष्टमवशिष्टम्।

प्रतिपादितेऽर्थे प्रावादुकपद्यं प्रमाणयति— **अत्र श्लोक इति**। दोषमा-

तामेतामेवं कवयः स्तुवन्ति—

'सति वक्तरि सत्यर्थे सति शब्दानुशासने ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥'

उदाहरणम्—

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

---

त्राभिः असाधुत्वादिदोषलेशैरपि । अस्पृष्टा असंबद्धा, अनुपगतदोषमात्रसंबन्धेति यावत् । 'मात्रा परिच्छदे वर्णमाने कर्णादिभूषणे । सैवाल्पपरिमाणे च' इति नानार्थरत्नमाला । समग्रैः अन्यूनैः गुणैः ओजःप्रसादादिभिः गुम्भिता संघटिता । विपञ्ची वीणा । 'वीणा तु वल्लकी । विपञ्ची' इत्यमरः । तस्याः स्वराः श्रोतृमनोरञ्जकाः षड्जादयोऽत्र विवक्षिताः न तु क्वणनमात्रम्; तस्य मनोरञ्जकत्वाभावात् । तदुक्तं संगीतरत्नाकरे, 'श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥' इति । षड्जादिषु रूढश्चायम् । तथा चाञ्जनेये, 'स्वरशब्दो मयूरादिसमुत्पन्नेषु सप्तसु । षड्जादिष्वेव रूढोऽयमतो नैवाक्षु वर्तते ॥' इति । तेषां सौभाग्यमिव सौभाग्यं यस्या इति विग्रहः ।

किंच, अस्याश्चर्वणीयरसचमत्कारकारितया समग्रसौन्दर्यशालितया च कविकुलोपलालनीयतामाकलयति—**तामेतामिति** । **सतीति** । सच्छब्दोऽत्र साध्वर्थः । 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ।' इत्यमरः । वक्ता कविः । अर्थः अपूर्वतयोल्लिखितः । शब्दानुशासनम् अनुशिष्टः शब्द आकाङ्क्षायोग्यतादिविशिष्टश्च । वक्तरि शब्दे च अर्थे च साधौ सत्यपि येन विना वाङ्मधु वाचां मधु न परिस्रवति न स्यन्दते; तद्वैदर्भीनामकं वस्त्वस्तीति योजना । इह मधुशब्देन मुख्यार्थासंभवात्सहृदयहृदयैरास्वाद्यः समग्रसौन्दर्यसमुन्मिषितो रसो लक्ष्यते ।

उक्ताया रीतेरुदाहरणमुपदर्शयितुमाह—**उदाहरणमिति** । उच्यत इति शेषः । 'वैदर्भीरीतिसंदर्भे कालिदासः प्रगल्भते' इति दर्शयितुं तदीयं पद्यमुदाहरति—**गाहन्तामिति** । एषा हि शकुन्तलाविलोकनोत्कलिकावशंवदहृदयस्य मृगयाविहाराद्विरिंसतो दुष्यन्तस्योक्तिः । महिष्यश्च महिषाश्च महिषाः । 'पुमा-

विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥'

## ओजःकान्तिमती गौडीया ॥ १२ ॥

न्स्त्रिया' इत्येकशेषः; एवं मृगकुलमित्यत्राप्येकशेषो वेदितव्यः । निपानानि कूपसमीपतः कल्पिता जलाधाराः । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । तेषु सलिलम् । तदेव विशिनष्टि—शृङ्गैर्मुहुस्ताडितमिति । महिषा हि जलमवगाह्य दशतः शिरसि दंशानपवारयितुं शृङ्गैर्मुहुस्ताडयन्तीति स्वभावोक्तिः । गाहन्तामित्यादिषु सर्वत्र आमन्त्रणे लोट् । छायासु अनातपेषु बद्धानि कदम्बकानि समूहा येनेति विग्रहः । 'निकुरुम्बं कदम्बकम्' इत्यमरः । कदम्बकानां बहुत्वविवक्षायां मृगकुलस्य अन्यपदार्थत्वमुपपद्यते; अतो न पौनरुक्त्यमाशङ्कनीयम् । उद्गीर्णस्य वावगीर्णस्य वा मन्थो रोमन्थः, चर्वितचर्वणमित्यर्थः । 'विस्रब्धं कुरुतां वराहविततिर्मुस्ताक्षतिं पल्वले' इति प्राचीनः पाठ इति संप्रदायविदः । पाठान्तरं तु प्रक्रमभङ्गशङ्काकलङ्कमङ्कुरयेत् । 'अस्मत्' इति पञ्चमीबहुवचनान्तं पृथक्पदम् । विश्राम्यतेर्व्यापारविरामार्थत्वात् पञ्चमी । षष्ठीसमासो वा । अत्र ओजःप्रसादादयो गुणाः परा प्रतिष्ठां लभन्ते । तथा हि— 'छायाबद्धकदम्बकम्' 'शिथिलज्याबन्धम्' इत्यत्र बन्धस्य गाढत्वादोजः । 'छायाबद्धकदम्बकं मृगकुलम्' इत्यत्र बन्धस्य गाढत्वशैथिल्ययो संप्लवात्प्रसादः । 'महिषा निपानसलिलम्' इत्यत्र मसृणत्वाच्छ्लेषः । 'गाहन्ताम्' इत्यारभ्य येनैव मार्गेण उपक्रमः, तेनैव मार्गेण उपसंहार इति मार्गाभेदात्समता । 'गाहन्ताम्' इत्यत्रारोहः । 'महिषाः' इत्यत्रावरोहः । एवमन्यत्रापि आरोहावरोहक्रमस्फुरणात्समाधिः । 'शृङ्गैर्मुहुस्ताडितम्' इति पृथक्पदत्वान्माधुर्यम् । 'रोमन्थमभ्यस्यतु' इत्यादौ बन्धस्याजरठत्वात्सौकुमार्यम् । '[illegible]थिलज्याबन्धमस्मद्धनुः' इत्यत्र बन्धस्य विकटत्वादुदारता । पदानामुज्ज्वलत्वात्का[illegible] । अर्थाभिव्यक्तिहेतुत्वादर्थव्यक्तिरिति दिङ्मात्रप्रदर्शनम् । गुणस्वरूपनिरूपणं तु गुणविवेचने अधिकरणे करिष्यते ।

क्रमप्राप्तां गौडीयामाह—ओजःकान्तिमतीति । प्रत्ययार्थं प्रत्याययति–

**ओजः कान्तिश्च विद्येते यस्यां सा ओजःकान्तिमती गौडीया नाम रीतिः । माधुर्यसौकुमार्ययोरभावात् समासबहुला अत्युल्बणपदा च । अत्र श्लोकः—**

**' समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम् ।**
**गौडीयामपि गायन्ति रीतिं रीतिविचक्षणाः ॥ '**

**उदाहरणम्—**

**' दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-**
**ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।**

**ओजः कान्तिश्च विद्येते इति** । अत्र भूमार्थेन मतुपा ओजःकान्त्योः प्राचुर्यप्रतिपादनात् अनुकूलानामनुल्बणानामन्येषां गुणानामनिराकरणम्, प्रतिकूलयोस्तु माधुर्यसौकुमार्ययोरपवारणम्, अत एव दीर्घसमासत्वम्, अत्युद्भटपदत्वं च सूचितम्; तदिदमभिसंधायाह— **माधुर्यसौकुमार्ययोरभावादिति** । प्रतिपादितेऽर्थे प्राचामाभाणकं प्रमाणयति— **समस्तेति** । समस्तानि समासवृत्तिमापन्नानि अत्युद्भटानि पदानि यस्या इति विग्रहः । लक्षिताया रीतेर्लक्ष्यमुपक्षिपति— **उदाहरणमिति** । एषा खलु धनुर्धरधुरन्धरेण रघुनन्दनेन गाढाकर्षणात्खण्डिते खण्डपरशोः कोदण्डे तद्भङ्गसंघटितनिराघाटघोषवर्णनोपोद्घातेन तस्यैव भुजबलभूमानमभिलक्षयतो लक्ष्मणस्योक्तिः । दोर्दण्डेन अञ्चितमाकृष्टम् । औचित्यादञ्चतिरत्राकर्षणे वर्तते । ननु यद्याकर्षणमञ्चतेरर्थः, तर्ह्यपूजनार्थस्य तस्य 'नाञ्चेः पूजायाम्' इति नलोपप्रतिषेधो न सिद्ध्येत्, 'अञ्चेः पूजायाम्' इति इडागमश्च न स्यादिति न चोदनीयम्; अत्र कवेः कार्यकारणयोरभेदोपचाराद्दुराधर्षधनुराकर्षणमेव पूजनं विवक्षितमित्यविरोधः । आर्यः अग्रजः । तदुक्तं भामहेन, 'भगवन्तोऽवरैर्वाच्या विद्वद्देवर्षिलिङ्गिनः । विप्रामात्याग्रजास्त्वार्या नटीसूत्रभृतौ मिथः ॥' तस्य यत् बालचरितं ताटकावधादि धनुर्भङ्गान्तं तदेव प्रस्तावना तत्र डिण्डिमः । अत्र बालचरितस्य प्रस्तावनात्वरूपणेन रावणवधान्तस्य तस्य कुमारचरितस्यापि नाटकत्वमासूत्र्यते । तथा च कुमारचरितनाटकस्य बालचरितं प्रस्तावना प्राथमिकमङ्गमिति परम्परितरूपकौचित्यमपि परिगृहीतं भवति । प्रस्तावनास्वरूपं दशरूपके दर्शितम्, 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्य

द्राक्पर्यस्तकपालसंपुटमितब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

## माधुर्यसौकुमार्योपपन्ना पाञ्चाली ॥ १३ ॥

माधुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिः। ओजःकान्त्यभावात् अनुल्बणपदा विच्छाया च।

तथा च श्लोकः—

'आश्लिष्टश्लथभावां तु पुराणच्छाययान्विताम्।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥'

अत्रोदाहरणम्—

'ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा।

प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्। प्रस्तावना वा तत्र स्यात्' इति। अन्यच्च 'वस्तुनः प्रतिपाद्यस्य तीर्थे प्रस्तावनोच्यते' इति। द्राक्पर्यस्ते झटिति चलिते कपाले शकले तयोः संपुटः समुद्गकः तेन मितं परिमितं परिच्छिन्नं यत् ब्रह्माण्ड तदेव भाण्डं तस्योदरे भ्राम्यन् समन्तात्पर्यटन् पिण्डितः संकोचितः चण्डिमा यस्येति विग्रहः। तथा पुराणम्, 'अप एव ससर्जादौ तासु वीर्यमपासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिञ्जज्ञे स्वय ब्रह्मा सर्वलोकपितामहः। तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरान्। स्वयमेवात्मनो ध्यानात्तदण्डमकरो द्विधा। ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे' इति। अद्यापि चिरातीतेऽपि। टङ्कारध्वनिः प्रतिश्रुत्। न विश्राम्यति न विरमति। अत्र बन्धस्य गाढत्वौज्ज्वल्ययोरुत्कटत्वादुल्बणावोजःकान्तिगुणौ। 'प्रभूयस्त्वोल्बणपदत्वे चातिस्फुटे।

अथ पाञ्चाली प्रपञ्चयति— **माधुर्येति**। माधुर्यसौकुमार्यप्रतिपक्षयोरोजःकान्त्योरभावाद्बन्धस्य शैथिल्यम्, अनुल्बणपदत्वं चेत्याह— **ओज इति**। **आश्लिष्टेति**। श्लोकः स्पष्टार्थः। उदाहरति— **ग्राम इति**। इयं हि कस्यचि-

तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥'

एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति ।

**तासां पूर्वा ग्राह्या गुणसाकल्यात् ॥ १४ ॥**

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या, गुणानां साकल्यात् ।

**न पुनरितरे स्तोकगुणत्वात् ॥ १५ ॥**

इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये, स्तोकगुणत्वात् ।

**तदारोहणार्थमितराभ्यास इत्येके ॥ १६ ॥**

ग्रामीणस्य गृहे निशि निद्रातु भद्रवेदिमधिशय्य पर्जन्यगर्जितैस्तर्जिते निजनिदेशापचारनिष्कृपकुपितकुसुमशरशरव्रातपातक्लिष्टतया निर्विष्टवति कष्टां दशां वैदेशिके तद्दण्डपातभीतिसमाकुलायाः कुलवृद्धायाः पुनरन्यमध्वन्य प्रत्युक्तिः । अत्र 'पथः ष्कन्' 'पन्थो ण नित्यम्' इति नित्यं गच्छत पान्थत्वम्, अन्यस्य च पथिकत्वमिति वृत्तिकारवचनादर्थभेदमाश्रित्य, यदि पथिकाय वसतिर्न दीयेत तत्पान्थेन किमपराद्धमिति न चोदनीयम्; पान्थपथिकशब्दयोः पर्यायतयाभिधानदर्शनात् कविभिरविशेषेण प्रयुज्यमानत्वात् । 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।' इत्यमर. । 'तत्' इति अमङ्गलतयोच्चारयितुमनुचितत्वान्मरणं तच्छब्देन व्यपदिश्यते । करङ्कः शवः । रीतिस्वरूपं निरूप्य तदुपयोगं सदृष्टान्तमाचष्टे— **एतास्विति** ।

नन्वेतास्तिस्रो वृत्तयः समशीर्षकतया किं कविभिरुपादेयाः ? नेत्याह— **तासामिति** । वृत्तिः स्पष्टार्था ।

प्रयोजकाभावादन्ययोर्न ग्राह्यत्वमित्याह— **न पुनरिति** ।

वाहारोहाय बालस्य मेषारोहानुशीलनवद्वैदर्भीसंदर्भलाभाय तदितराभ्यास इति केचिदाचक्षते । तत्पक्षं प्रतिक्षेप्तुमुपक्षिपति— **तदारोहणार्थमिति** ।

तस्या वैदर्भ्या एवारोहणार्थमितरयोरपि रीत्योरभ्यास इत्येके मन्यन्ते ।

**तच्च न । अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ॥ १७ ॥**

नह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते ।

निदर्शनार्थमाह—

**न शणसूत्रवानाभ्यासे त्रसरसूत्रवान-वैचित्र्यलाभः ॥ १८ ॥**

नहि शणसूत्रवानमभ्यस्यन्कुविन्दस्त्रसरतन्तुवानवैचित्र्यं लभते ।

[1]**सापि समासाभावे शुद्धवैदर्भी ॥ १९ ॥**

सापि वैदर्भी रीतिः शुद्धवैदर्भी भण्यते; यदि समासवत्पदं न भवति ।

**तस्यामर्थगुणसंपदास्वाद्या ॥ २० ॥**

तस्यां वैदर्भ्यामर्थगुणसंपत् आस्वाद्या भवति ।

---

तेषां मतं दूषयति—तच्च नेति । न ह्यताद्दशं कर्म परिशीलयतस्ताद्दशकर्मकौशलं सिध्यति । यथा लोके वाजिनमारुरुक्षतो राजपुत्रादेस्तदुपयोगिजान्ववष्टम्भजवगतिमण्डलीक्रियादिसिद्धये मेषारोहाभ्यासो दृश्यते, न तथा कस्यचिदपि कुविन्दस्य सूक्ष्मतन्तुवानकौशलसिद्ध्यै गोणीवानाभ्यासो दृष्टः; तयोर्वैसादृश्येन उपयोगाभावात । अतो वैदर्भीसंदर्भलाभाय गौडीयपाञ्चालरीत्योरभ्यास इति मतमनादरणीयम् ।

शणसूत्रं गोण्याद्युपादानम् । त्रसरतन्तुः श्लक्ष्णवस्त्राद्युपादानम् । वानमिति, वयतेर्ल्युटि रूपम् ।

सापीति । सर्वं स्पष्टम् ।

शब्दभाग इव अर्थभागेऽपि गुणसंपत्तिर्वैदर्भ्युपरागादास्वादनीयेत्याह—

[1] इद सूत्र तद्वृत्तिश्च बहुषु कोशेषु नोपलभ्यते ।

**तदुपारोहादर्थगुणलेशोऽपि ॥ २१ ॥**

**तदुपधानतः खल्वर्थगुणलेशोऽपि स्वदते । किमङ्ग, पुनरर्थगुणसंपत् । तथा चाहुः—**

**'[1]किं त्वस्ति काचिदपरैव पदानुपूर्वी**
**यस्यां न किंचिदपि किंचिदिवावभाति ॥'**

**'वचसि यमधिशय्य स्यन्दते वाचकश्री-**
**र्वितथमवितथत्वं यत्र वस्तु प्रयाति ।**

तस्यामिति । वैदर्भीरीत्यवष्टम्भादर्थेऽप्यारोपिता गुणसंपत्तिरास्वादनीयेत्यर्थः ।

अमुमेवार्थं कैमुतिकन्यायेन समर्थयते— **तदुपेति । तदुपधानत इति ।** उपधानं उपरञ्जनम् । 'अङ्गेत्यामन्त्रणेऽव्ययम्' इत्यमरः । उक्तार्थेऽभियुक्तोक्तिमभिव्यनक्ति— **तथा चाहुरिति ।** 'किं त्वस्ति...' इत्यत्र 'जीवन्पदार्थपरिरम्भणमन्तरेण शब्दावधिर्भवति न स्फुरणेन सत्यम्' इति पूर्वार्धं पठन्ति । ननु पदपदार्थयोर्गुणचमत्कारो वैदर्भीप्रसादलभ्य इति यदुक्तम्, तदयुक्तम्; पदार्थपरिरम्भणमन्तरेण वैदर्भीस्फुरणमात्रेण जीवन्त्या वाक्यविश्रान्तेरसंभवादिति शङ्कामनुभाषते— जीवन्निति । जीवन् तर्कवाक्यवैलक्षण्येन सहृदयहृदयाह्लादकारीत्यर्थः । शब्दावधिः वाक्यविश्रान्तिः । यदुक्तं शङ्कावादिना, तत् सत्यम् अस्त्येव । किं तु पदार्थव्यतिरिक्ता तत उत्कृष्टा पदसंघटनापरिपाटी काचिदस्ति । सा च पदपदार्थयोः सजीवत्वायावश्यमङ्गीकरणीयेत्याह— **किं त्विति ।** यस्यां पदानुपूर्व्याम् । न किंचिदपि असदपि वस्तु । किंचिदिव सदिव । अवभाति प्रतिभाति, प्रबन्धप्रौढिप्रकटितपदघटनापरिपाटिवशात्कल्प्यं वस्तु प्रत्यक्षायमाणं प्रतिभासत इत्यर्थः । यदाहुः, 'अपारे काव्यसंसारे कविरेकः प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥' इति । **वचसीति ।** काव्यात्मके

1. निर्णयसागरादिमुद्रितेषु पुस्तकेषु 'किंत्वस्ति' इत्येतत् पूर्वार्धतया, उत्तरार्धतया च 'आनन्दयत्यथ च कर्णपथं प्रयाता चेतः सताममृतवृष्टिरिव प्रविष्टा' इत्येतत् योजितं दृश्यते । परं त्विदमसंगतमिव प्रतिभाति; यतो व्याख्याता पूर्वार्धमन्यदेवाभिविलिख्य व्याचष्टे; न च व्याकरोति 'आनन्दयति' इत्येतत् । अतोऽस्माभिरन्यस्थलेष्विवात्रापि व्याख्याकृदादृत एव पाठः संयोजितः ।

उदयति हि स तादृक्क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः ॥'

**सापि वैदर्भी तात्स्थ्यात् ॥ २२ ॥**

सापीयमर्थगुणसंपद्वैदर्भीत्युच्यते। तात्स्थ्यादित्युपचारतो व्यवहारं दर्शयति ।

इति काव्यालंकारसूत्रवृत्तौ शारीरे
**प्रथमेऽधिकरणे द्वितीयोऽध्यायः ।**

वाक्य इत्यर्थः । वाचकश्री शब्दसंपत् । यं वैदर्भीपाकम् । अधिशय्य, स्यन्दते रसवर्षिणी भवति । यत्र यस्मिन्वैदर्भीपाके । वितथं नीरस वस्तु । अवितथत्वं सरसत्वम् । प्रयाति । तदुक्तं लोचने, 'जगद्ग्रावप्रख्य निजरसभरात्पूरयति च' इति । अन्यच्च, 'भावानचेतनानपि चेतनवच्चेतनानचेतनवत् । व्यवहारयति यथेच्छं सुकविः काव्ये स्वतन्त्रतया ॥' इति । स्पष्टमवशिष्टम् ।

वैदर्भीनिष्ठत्वादर्थगुणसंपदि वैदर्भीति व्यवहारोऽप्युपचर्यत इत्याह— **सापीति** । [1]तस्मिन् तिष्ठतीति तत्स्थः, तस्य भावः तात्स्थ्य तस्मादिति. उपचारे संबन्ध उक्तः ।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति-
व्याख्यायां काव्यालंकारकामधेनौ शारीरे
**प्रथमेऽधिकरणे द्वितीयोऽध्यायः ॥**



[1] सामान्यतो व्युत्पत्तिरियम

# तृतीयोऽध्यायः

अधिकारिचिन्तां रीतितत्त्वं च निरूप्य काव्याङ्गान्युपदर्शयितुमाह—

**लोको विद्या प्रकीर्णं च काव्याङ्गानि ॥ १ ॥**

उद्देशक्रमेणैतद्व्याचष्टे—

**लोकवृत्तं लोकः ॥ २ ॥**

लोकः स्थावरजङ्गमात्मा तस्य वर्तनं वृत्तमिति ।

**शब्दस्मृत्यभिधानकोशच्छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्याः ॥ ३ ॥**

वरिवस्यामि मनसा वचसामधिदेवताम् ।
लीलालास्यगृहं यस्याश्चतुर्मुखचतुर्मुखी ॥ २ ॥

अध्यायान्तरमारभमाणः प्रागध्यायप्रपञ्चितमर्थं संक्षिप्य दर्शयन्नध्यायद्वयमैत्रीमासूत्रयति— **अधिकारिचिन्तामिति** । अङ्गिनि निरूपितेऽङ्गानां निरूपणमुचितमिति संगतिः ।

अङ्गान्युद्दिशति— **लोक इति** । वर्णनीयमन्तरेण किं वर्ण्येत इति लोकः प्रथममुद्दिष्टः । ततश्च संस्कृताः शब्दाः । तदनु तदर्थाः । अथ वृत्तम् । अनन्तरमितिवृत्तवैचित्र्यहेतुः शृङ्गाराङ्गं कलाकौशलम् । ततो रसोपयोगी कामव्यवहारः । ततश्चार्थानर्थविवेकहेतुर्दण्डनीतिः । पश्चाल्लक्ष्यज्ञत्वादय इत्युद्देशक्रमः । अत्र 'नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् । अमन्दश्चाभियोगोऽस्या कारणं काव्यसम्पदः ॥' इति, 'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥' इति चोक्तरीत्या कवित्वबीजं प्रथमं परिगणनीयम् । यत्तु पश्चात् परिगणितमिति, तच्चिन्त्यम् ।

लोकशब्दोऽयमुपचाराल्लोकवर्तने वर्तत इत्याह— **लोकवृत्तमिति** ।

शब्दस्मृत्यादीनां तत्पूर्वत्वं पूर्वं काव्यबन्धेष्वपेक्षणीयत्वात्।

तासां काव्याङ्गत्वं योजयितुमाह—

**शब्दस्मृतेः शब्दशुद्धिः ॥ ४ ॥**

शब्दस्मृतेः व्याकरणात् शब्दानां शुद्धिः साधुत्वनिश्चयः कर्तव्यः। शुद्धानि हि पदानि निष्कम्पैः कविभिः प्रयुज्यन्ते।

**अभिधानकोशात्पदार्थनिश्चयः ॥ ५ ॥**

पदं हि रचनाप्रवेशयोग्यं भावयन्संदिग्धार्थत्वेन न गृह्णीयान्न वा जह्यादिति काव्यबन्धविघ्नः। तस्मादभिधानकोशतः पदार्थनिश्चयः कर्त-

अथ विद्या उद्दिशति—**शब्दस्मृतीति**। 'शास्त्रतस्ते' इत्यत्र सूत्रे अलङ्कारविद्योपयोगस्य प्रागेवोपदर्शितत्वान्नात्र विद्यामध्ये परिगणनमित्यवगन्तव्यम्। शास्त्रशब्दः कलाकामशब्दाभ्यामभिसंबन्धनीयः, तत्संबन्धं विनापि अन्यत्र शास्त्रत्वप्रतिपत्तेः। 'पूर्वाः' इत्यनेन गणितविद्यादिपरिग्रहः। 'प्रधानस्योपकारकमङ्गम्' इति न्यायेन क्रमादङ्गानामङ्गिन्युपयोगं दर्शयिष्यन्ननन्तरसूत्रावताराय पीठिकां प्रतिष्ठापयति— **शब्दस्मृत्यादीनामिति**।

व्याकरणं हि मूलं सर्वविद्यानामिति युक्त्या प्रथमोद्दिष्टायाः शब्दविद्याया उपयोगं दर्शयति—**शब्दस्मृतेरिति**। व्याचष्टे— **शब्दस्मृतेर्व्याकरणादिति**। साधुत्वनिश्चयः अस्मिन्नर्थेऽयं शब्दः साधुरिति निश्चयः। निष्कम्पैः निर्भयैरित्यर्थः। अपशब्दप्रयोगे तु कविकाव्ययोरनादरणीयत्वप्रसङ्ग इति द्रष्टव्यम्। तदुक्तम्, 'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले। सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः॥' इति। दण्डिनाप्युक्तम्, 'गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः। दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥' इति, 'तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन। स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥' इति च।

**पदं हीति**। अयमर्थः— 'आधानोद्धरणे तावद्यावद्दोलायते मनः' इत्युक्तनीत्या किमपि पदं काव्यबन्धे प्रयोगयोग्यं पुनः पुनश्चेतसि विनिवेशयन्कवि-

**व्यः । अपूर्वाभिधानलाभार्थत्वं त्वयुक्तमभिधानकोशस्य, अप्रयुक्तस्याप्रयोज्यत्वात् । यदि प्रयुक्तं प्रयुज्यते तर्हि किमिति संदिग्धार्थत्वमाशङ्कितं पदस्य? तन्न; तत्र सामान्येनार्थावगतिः संभवति । यथा नीवीशब्देन जघनवस्त्रग्रन्थिरुच्यत इति कस्यचिन्निश्चयः । स्त्रिया वा पुरुषस्य वेति संशयः 'नीवी संग्रथनं नार्या जघनस्थस्य वाससः' इति नाममालाप्रतीकमपश्यत इति । अथ कथम्**

**'विचित्रभोजनाभोगवर्धमानोदरास्थिभिः ।**
**केनचित्पूर्वमुक्तोऽपि नीवीबन्धः श्लथीकृतः ॥'**

**इति प्रयोगः? भ्रान्तेरुपचाराद्वा ।**

---

रभिधानकोशपरिशीलनमन्तरेण संदिग्धार्थतया प्रयोक्तुं परित्यक्तुं वा नोत्सहते । अतो बन्धविघ्नो जायेत । तस्मादभिधानकोशतः पदस्यार्थं निश्चित्य निर्विचिकित्सं प्रयुञ्जीत— इति । नन्वभिधानकोशस्येदमेव प्रयोजनमिति कोऽयं नियमः । अपूर्वपदप्रयोगलाभोऽपि किं न स्यादिति चोद्यमनूद्यावद्यति — **अपूर्वेति** । तत्र हेतुमाह— **अप्रयुक्तस्येति** । कविभिरिति शेषः । 'यदप्रयुक्तं कविभिरप्रयुक्तं तदुच्यते' इत्यप्रयुक्तत्वदोषस्य पददोषेषु लक्षितत्वात् । अप्रयोज्यत्वं चार्थाभिव्यक्तेरविलम्बेन समर्पकत्वाभावादिति द्रष्टव्यम् । ननु यदि प्रयुक्तमेव पदं कविना प्रयुज्येत, तर्हि कुतः संदेहः स्यादिति शङ्कते— **यदीति** । समाधत्ते— **सामान्येनेति** । 'एषा हि मे रणगतस्य दृढा प्रतिज्ञा द्रक्ष्यन्ति यन्न रिपवो जघनं हयानाम्' इति प्रयोगदर्शनात् जघनशब्दः पृष्ठवंशाधरत्रिकमात्रमभिधत्त इत्यभिमन्यमानस्य कस्यचिन्नीवीशब्दो जघनवस्त्रग्रन्थिमभिधत्त इति प्रतिपत्तिर्जायते । तच्च स्त्रिया वा पुरुषस्य वेति संशय उपपद्यत इत्यर्थः । नाममाला अभिधानकोशः, तस्याः प्रतीकं अवयवम् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । अपश्यतः अपरिशीलयत इति यावत् । यद्येवं तर्हि प्रयोगविरोधः किं न स्यादिति शङ्कते— **अथ कथमिति** । विचित्रभोजनाभोगेत्यस्मिन् पद्ये पुंसि विषये नीवीशब्दप्रयोगः कथमिति शङ्कितुरभिप्रायः । परिहरति— **भ्रान्तेरिति** । भ्रान्तिप्रयुक्तोऽयं प्रयोगः । अथवा, नीवीशब्दः पुरुषविषये लक्षणया प्रयुक्तः । पौरुषराहित्यप्रतिपत्तिः प्रयोजनमिति भावः ॥

## छन्दोविचितेर्वृत्तसंशयच्छेदः ॥ ६ ॥

काव्याभ्यासाद्वृत्तसंक्रान्तिर्भवत्येव। किं तु मात्रावृत्तादिषु कचित्संशयः स्यात्। अतो वृत्तसंशयच्छेदश्छन्दःशास्त्रतो विधेय इति।

## कलाशास्त्रेभ्यः कलातत्त्वस्य संवित् ॥ ७ ॥

कला गीतनृत्यचित्रादिकास्तासामभिधायकानि शास्त्राणि विशाखिलादिप्रणीतानि कलाशास्त्राणि। तेभ्यः कलातत्त्वस्य संवित् संवेदनम्।

---

वृत्तविद्यायाः प्रयोजन प्रस्तौति— छन्दोविचितेरिति। काव्येति। नानावृत्तात्मकत्वात्काव्यस्य तत्परिशीलनाद्वृत्तस्वरूपप्रतिफलनमस्त्येव; तथापि मात्रावृत्तादिषु मात्राकल्प्येषु वैतालीयादिषु छन्दःशास्त्रं विना निर्णयो दुष्कर इत्यर्थः। वैतालीयलक्षणं तु वृत्तरत्नकारे, 'षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः' इति ॥

कला इति। इदमात्र तु लोकतो विज्ञायत । तत्त्वज्ञान तु तच्छास्त्रत एव संपद्यते इत्यर्थः। कला नृत्यगीतादयश्चतुःषष्टिः। उपकलाश्चतुःशतम्। कलानामुद्देशः कृतो भामहेन. 'नृत्तं गीतं तथा वाद्यमालेख्यं मणिभूमिकाः। दशनाद्यङ्गरागश्च माल्यगुम्फविचित्रता। वेणुवीणादिकालापपाटवं शेखरक्रिया। नेपथ्यं गन्धयुक्तिश्च कर्णपत्रक्रियाभिधा। विशेषभेद्यक्लृप्तिश्च नानाभूषणयोजनम्। इन्द्रजालं कौचिमारं सामुद्रं हस्तलाघवम्। सूचीवानक्रिया सूत्रक्रिया सलिलवाद्यकम्। सूदशास्त्रपरिज्ञानं शारिकाशुकवादनम्। रसवादो वास्तुविद्या तक्षण मेचिकोत्करः। सजीवनिर्जीवद्यूतशास्त्रसंपाद्यपाटवम्। धोरणा मातृकायन्त्रं मातृकाकाव्यलक्षणम्। आकर्षकक्रीडितं च निमित्तागमवेदनम्। अग्न्यम्बुसेनादिस्तम्भो विषप्रतिविषागमः। पाञ्चालीनृत्तकरणं तण्डुल [illegible]लिक्रिया। प्रहेलिका दुर्वचकप्रतिमायादियोजनम्। मन्त्रवादपरिज्ञान विशीर्णाक्षरमुष्टिका। सर्वाभिधानकोशोक्तिः परकायप्रवेशनम्। जयव्यायामचित्राप्तिः पत्रिकाचित्रकर्तनम्। रत्नोत्पत्तिस्थानशास्त्रं दर्पणादिलिपिक्रिया। तिरस्करिण्याद्यवाप्तिः पुष्पशाटकिकागमः। हस्त्यश्वलक्षणज्ञान तिर्यग्घृदयवेदनम्। परेङ्गितपरिज्ञानं जलयानागमज्ञता। पर-

नहि कलातत्त्वानुपलब्धौ कलावस्तु सम्यङ्निबन्धुं शक्यमिति ।

**कामशास्त्रतः कामोपचारस्य ॥ ८ ॥**

संविदित्यनुवर्तते । कामोपचारस्य संवित् कामशास्त्रत इति । कामोपचारबहुलं हि वस्तु काव्यस्येति ।

**दण्डनीतेर्नयापनययोः ॥ ९ ॥**

दण्डनीतेरर्थशास्त्रान्नयस्यापनयस्य च संविदिति । तत्र षाड्गुण्यस्य यथावत्प्रयोगो नयः । तद्विपरीतोऽपनयः । नहि तावविज्ञाय नायकप्रतिनायकयोर्वृत्तं शक्यं काव्ये निबन्धुमिति ।

**इतिवृत्तकुटिलत्वं च ततः ॥ १० ॥**

इतिहासादिः इतिवृत्तं काव्यशरीरम्, तस्य कुटिलत्वं ततो दण्ड-

चेतःप्रवेशश्च चतुःषष्टिरिमाः कलाः[1] । अन्या उपकला प्रोक्तास्तासां संख्याचतुःशतम् । आभिरेव प्रपञ्चोऽयं वर्तते विजयी स्फुटम्' इति । अत्र ग्रन्थविस्तरभयादुपकलानामुद्देशो न कृतः । कलातत्त्वसंवित्तेरुपयोगं दर्शयति — न हीति ॥

**कामोपचारबहुलमिति** । वस्तु काव्यप्रतिपाद्यमितिवृत्तम् । काव्यस्य रसवत्त्वावश्यम्भावाद्रसस्य च शृङ्गारप्रमुखत्वात् तस्य च कामोपचारप्रचुरत्वात्, काव्यवस्त्वपि कामोपचारबहुलमिति भावः ॥

दण्डनीतेरुपयोगं दर्शयति— **दण्डनीतेरिति** । **षाड्गुण्यस्येति** । संधिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः । षड् गुणा एव षाड्गुण्यम् । स्वार्थिकः ष्यञ् ॥

**कुटिलत्वमिति** । यथा तापसवत्सराजादौ । आबलीयसेति । अबलीयांसमधिकृत्य कृतमधिकरणमाबलीयसम्, तत्प्रभृतौ प्रयोगाः मित्रभेदसुहृल्लाभा-

1. वात्स्यायनीयादिषु तु क्वचिद्भेद उपलभ्यते ।

नीतेः आबलीयसादिप्रयोगव्युत्पत्तिमूलत्वात्तस्याः। एवमन्यासामपि विद्यानां यथास्वमुपयोगो वर्णनीय इति।

**लक्ष्यज्ञत्वमभियोगो वृद्धसेवावेक्षणं प्रतिभानमवधानं च प्रकीर्णम् ॥ ११ ॥**

**तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ॥ १२ ॥**

अन्येषां काव्येषु परिचयो लक्ष्यज्ञत्वम्। ततो हि काव्यबन्धस्य व्युत्पत्तिर्भवति ॥

**काव्यबन्धोद्यमोऽभियोगः ॥ १३ ॥**

बन्धनं बन्धः। काव्यस्य बन्धो रचना काव्यबन्धः। तत्रोद्यमोऽभियोगः। स हि कवित्वप्रकर्षमादधाति।

**काव्योपदेशगुरुशुश्रूषणं वृद्धसेवा ॥ १४ ॥**

काव्योपदेशे गुरव उपदेष्टारः। तेषां शुश्रूषणं वृद्धसेवा। ततः काव्यविद्यायाः संक्रान्तिर्भवति।

---

दयः तेषां व्युत्पत्तौ सा दण्डनीतिर्मूलमिति भावः। **एवमन्यासामिति**। गणितादिविद्यानामित्यर्थः। एवमष्टादशभेदभिन्नानामशेषाणामपि विद्यानां काव्याङ्गत्वमुक्तं भवति। तासामुपयोगश्च यथास्वं लब्धवर्णैर्द्रष्टव्यः। यथाहुः, 'न स शब्दो न तद्वाच्यं न सा विद्या न सा कला। जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः।' इति।

**अन्येषामिति**। कवीनामिति शेषः।

बन्धशब्दो भावसाधन इत्याह— **बन्धनं बन्ध** इति। पूर्वं कथापरीक्षा, तत्राधिकावावापोद्वापौ, फलपर्यन्ततानयनम्, रसं प्रति जागरूकता, रसोचितविभावादिवर्णनायामलंकारौचित्यमित्याद्युल्लेखपूर्वकं गुम्फनं काव्यबन्धः। तत्रोद्यमः अभियोगः ॥

**काव्योपदेश इति**। यद्यपि श्रोतुमिच्छा शुश्रूषा इति शब्दव्युत्पत्तिः;

## पदाधानोद्धरणमवेक्षणम् ॥ १५ ॥

पदस्य आधानं न्यासः। उद्धरणमपसारणम्। तयोः खल्ववेक्षणम्।

अत्र श्लोकौ—

'आधानोद्धरणे तावद्यावद्दोलायते मनः।
पदस्य स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥'

## कवित्वबीजं प्रतिभानम् ॥ १६ ॥

कवित्वस्य बीजं कवित्वबीजं जन्मान्तरागतसंस्कारविशेषः कश्चित्; यस्माद्विना काव्यं न निष्पद्यते, निष्पन्नं वावहासायतनं स्यात्।

## चित्तैकाग्र्यमवधानम् ॥ १७ ॥

---

तथापि 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम्' इति निरूढत्वेनाभिधानात्सामानाधिकरण्यं घटते।

अवेक्षणमाह— **पदाधानेति**। अत्र भामहेन भणितं प्रमाणयति— **आधानोद्धरणे** इति। श्लोकद्वयेन क्रमादन्वयव्यतिरेकाभ्यां पदानां स्थैर्य संपादनीयमित्युक्तम्। इत्थमर्थपाकोऽपि समर्थनीयः।

**कवित्वस्येति**। बीजमभिनवपदार्थस्फुरणहेतुः। संस्कारो वासनात्मा। यदाह भट्टगोपाल', 'कवित्वस्य लोकोत्तरवर्णनानैपुणलक्षणस्य, बीजमुपादानस्थानीय'. संस्कारविशेषः कार्यकल्पनीया काचिद्वासना शक्तिः' इति। काव्यादर्शेऽपि 'न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि प्रतिभानमद्भुतम्।' इति। **यस्माद्विनेति**। पृथग्विनादिसूत्रे विकल्पेन तृतीयाविधानात् पक्षे पञ्चमी। हासायतनं परिहासास्पदम्। तादृशं हि काव्यमनर्थाय भवति कवेः। तदुक्तम्, 'नाकवित्वमधर्माय मृतये दण्डनाय वा। कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥' इति।

चित्तस्यैकाग्र्यं बाह्यार्थनिवृत्तिः; तत् अवधानम्। अवहितं हि चित्तमर्थान्पश्यति।

**तद्देशकालाभ्याम् ॥ १८ ॥**

तत् अवधानं देशात्कालाच्च समुत्पद्यते।

कौ पुनर्देशकालावित्यत्राह—

**विविक्तो देशः ॥ १९ ॥**

विविक्तो निर्जनः।

**रात्रियामस्तुरीयः कालः ॥ २० ॥**

रात्रेर्यामो रात्रियामः प्रहरः तुरीयश्चतुर्थः काल इति। तद्वशाद्विषयोपरतं चित्तं प्रसन्नमवधत्ते।

एवं काव्याङ्गान्युपदर्श्य काव्यविशेषज्ञानार्थमाह—

---

चित्तस्येति। बहिरिन्द्रियव्यापारविरामान्मनसो बाह्यार्थानुपरक्तिरवधानम्। अवधानस्य प्रयोजनमभिधत्ते— अवहितमिति। अर्थान्पश्यति अभिनवपदार्थानप्रतिबन्धमुल्लिखतीत्यर्थः ॥

तद्देशकालाभ्यामिति। अर्थाद्विशिष्टाभ्यां समुचिताभ्यामित्यवगन्तव्यम्।

विविक्तो निर्जनप्रदेशः। 'विविक्तौ पूतविजनौ' इत्यमरः ॥

तुरीय इति। प्रथमादिषु त्रिषु प्रहरेष्वाहारविहारनिद्रासु सांमुख्यं मनसः। पश्चिमे तु प्रहरे प्रसादः संभवतीति तुरीय इत्युक्तम्। यद्वा, यद्यपि प्रथमादीनामपि चतुःसंख्यापूरकत्वम्, तथाप्युपादानसामर्थ्यादिह पश्चिमो यामस्तुरीय इति गम्यते। तथा च कालिदासः, 'पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना।' इति। माघोऽपि 'गहनमपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजातम्।' इति।

वृत्तवर्तिष्यमाणयोः संगतिमुल्लिङ्गयन्, काव्यभेदान् कथयितुमाह— **एवमिति**। **गद्यमिति**। 'गद व्यक्तायां वाचि' इति धातोः 'गदमदचरयमश्चा-

**काव्यं गद्यं पद्यं च ॥ २१ ॥**

गद्यस्य पूर्वं निर्देशो दुर्लक्षविशेषत्वेन दुर्बन्धत्वात् । तथाहुः—
'गद्यं कवीनां निकषं वदन्ति ।' इति ।

तच्च त्रिधा भिन्नमिति दर्शयितुमाह—

**गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥ २२ ॥**

तल्लक्षणान्याह—

---

नुपसर्गे' इति कर्मणि यत्प्रत्यये सति गद्यमिति रूपम् । यद्वा 'स्तनगदी देवशब्दे' इति चौरादिकणिजन्तात् 'अचो यत्' इति यत्प्रत्यये सति गद्यमिति रूपम्, देवैः शब्दनीयं गद्यमिति । पादेषु भवं पद्यम् । शरीरमिति विवक्षायां 'शरीरावयवाच्च' इति भवार्थे यत्प्रत्यये भसंज्ञायां पदादेशे च सति पद्यमिति रूपम् । अनेन पद्यसामान्यलक्षणं सूचितं भवति । तदुक्तं काव्यादर्शे, 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।' इति । गद्यस्य पूर्वनिर्देशे हेतुमाह— **गद्यस्येति** । दुर्लक्षाः कृच्छ्रेण लक्ष्याः विशेषाः गुरुलघुनियमादयो यस्य तस्य भावः तेन हेतुना, दुर्बन्धं कृच्छ्रेण बन्धुं शक्यं तस्य भावस्तस्मात् पूर्वनिर्देशः, कृत इति शेषः । अत्राभाणकमपि दर्शयति— **तथाहुरिति** । निकषो हेमादिकषणोपलः । 'निकषस्तु घृषिर्घृष्यो हेमादिनिकषोपलः ।' इति वैजयन्ती । कनकानामिव कवीनां प्रकर्षापकर्षपरीक्षास्थानमिति यावत् ।

गद्यभेदान् गणयितुमाह— **तच्चेति** । वृत्तगन्धि क्वचिद्भागे वृत्तच्छायानुकारि । चूर्णपदेनोपचारात व्यस्तपदसमाहारो लक्ष्यते । तेन व्यस्तपदबहुल चूर्णम् । **उत्कलिकाप्रायमिति** । उत्कलिका उत्कण्ठा । 'उत्कण्ठोत्कलिके समे' इत्यमरः । उत्कलिकायाः प्रायः प्रयोगबाहुल्यं यस्मिंस्तत् उत्कलिकाप्रायं गद्यम् । यस्मिन् श्रूयमाणे श्रोतॄणामुत्कण्ठा बहुला भवतीत्यर्थः । यद्वा कलिकाशब्दोऽत्र लक्षणया रुहरुहिकायां वर्तते । उल्लसन्तीं कलिकां रुहरुहिकां प्रैति प्राप्नोतीत्युत्कलिकाप्रायम् । यत्र पदसंदर्भपरिपाटी काण्डोपकाण्डसंरोहशालिनी कलिकेवोल्लसति, तदुत्कलिकाप्रायमित्यर्थः ।

विशेषलक्षणानि विवरीतुमाह— **तल्लक्षणानीति** । **वसन्ततिलकेति** ।

## पद्यभागवद्वृत्तगन्धि ॥ २३ ॥

पद्यस्य भागाः पद्यभागास्तद्वत् वृत्तगन्धि ।

यथा—'पातालतालुतलवासिषु दानवेषु' इति ।

अत्र हि वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते ।

## अनाविद्धललितपदं चूर्णम् ॥ २४ ॥

अनाविद्धान्यदीर्घसमासानि ललितान्यनुद्धतानि पदानि यस्मिंस्तदनाविद्धललितपदं चूर्णमिति ।

यथा—'अभ्यासो हि कर्मणां कौशलमावहति । नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति ।' इति ।

## विपरीतमुत्कलिकाप्रायम् ॥ २५ ॥

विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम् ।

यथा—'कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इति ।

## पद्यमनेकभेदम् ॥ २६ ॥

---

'उक्तं वसन्ततिलकं तभजा जगौ गः' इति तल्लक्षणम् ।

**अनाविद्धेति** । वृत्तिः स्पष्टार्था । उदाहरति—**अभ्यास इति** । **नहि सकृदिति** । नहीति निपातसमुदायः प्रतिषेधवाचकः सकृदित्यनेन संबध्यते, तथा चासकृदित्यर्थः संपद्यते । मात्रशब्देन सहकारिमान्द्यादिर्व्यावर्त्यते । तेनोदबिन्दुरप्यसकृन्निपातमात्रेण ग्रावणि पाषाणे निम्नतामादधातीत्यन्वयमुखेन पूर्ववाक्यार्थः समर्थितो भवति ।

**विपरीतमिति** । सुगमम् । चपेटा करतलाघातः । 'चपेटः प्रतते पाणौ तदाघाते स्त्रियामयम्' इत्यमरशेषः ॥

पद्यं खल्वनेकेन समार्धसमविषमादिना भेदेन उपेतं भवति ।

**तदनिबद्धं निबद्धं च ॥ २७ ॥**

तदिदं गद्यपद्यरूपं काव्यमनिबद्धं निबद्धं च । अनयोः प्रसिद्धत्वाल्लक्षणं नोक्तम् ।

**क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ॥ २८ ॥**

तयोरित्यनिबद्धं निबद्धं च परामृश्यते । क्रमेण सिद्धिः क्रमसिद्धिः । अनिबद्धसिद्धौ निबद्धसिद्धिः स्रगुत्तंसवत् । यथा स्रजि मालायां सिद्धायामुत्तंसः शेखरः सिध्यति ।

---

पद्यं विभजते-- **समेति** । समवृत्तमर्धसमवृत्तं विषमवृत्तम् । आदिशब्देनार्यावैतालीयादिमात्रावृत्तानां परिग्रहः । समवृत्तादिलक्षणमुक्तं भामहेन, 'सममर्धसमं वृत्तं विषमं च त्रिधा मतम् । अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः । तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते । प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् । द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते । यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् । तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥' इति ।

गद्यपद्ययोरुभयोरप्यवान्तरभेदावाह-- **तदिति** । गद्यपद्यात्मकं काव्यं प्रकृतं तच्छब्देन परामृश्यत इति व्याचष्टे-- **तदिदं गद्यपद्यरूपमिति** । व्याख्याने जाड्यमव्याख्याने मौढ्यमित्यत आह-- **अनयोः प्रसिद्धत्वादिति** । अनिबद्धं मुक्तकं निबद्धं प्रबन्धरूपमिति प्रसिद्धिः । मुक्तकलक्षणमुक्तं भामहेन, 'प्रथमं मुक्तकादीनामृजु लक्षणमुच्यते । यदेव गाम्भीर्यौदार्यशौर्यनीतिमतिस्पृशा । भवेन्मुक्तकमेकेन द्विकं द्वाभ्यां त्रिकं त्रिभिः ॥' इति । निबद्धानि सर्गबन्धादीनि । तल्लक्षणं काव्यादर्शे, 'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्' इत्यादिना द्रष्टव्यम् ॥

अनयोरभ्यासक्रममाह— **क्रमसिद्धिरिति** । अनिबद्धमभ्यस्य निबद्धरचनायां यतितव्यमित्यर्थः । अत्र दृष्टान्तः 'स्रगुत्तंसवत्' इति ।

केचिदनिबद्ध एव पर्यवसिताः, तद्दूषणार्थमाह—

**नानिबद्धं चकास्त्येकतेजःपरमाणुवत् ॥ २९ ॥**

न खल्वनिबद्धं काव्यं चकास्ति दीप्यते। यथैकतेजःपरमाणुरिति।
अत्र श्लोकः—

'असंकलितरूपाणां काव्यानां नास्ति चारुता ।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः ॥' इति ।

**संदर्भेषु दशरूपकं श्रेयः ॥ ३० ॥**

संदर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः ॥

कस्मात्? तदाह—

**तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ॥ ३१ ॥**

तत् दशरूपकं हि यस्मात् चित्रं चित्रपटवत्। विशेषाणां साकल्यात् ।

---

अनिबद्धसिद्धिमात्रेण कविंमन्यानन्यानपवदितुमाह-- **केचिदिति** । प्रावादुकसंमतिं दर्शयति-- **अत्र श्लोक इति** । असंकलितरूपाणाम् अनिबद्धरूपाणामित्यर्थः ।

निबद्धेषु तरतमभावं निरूपयति— **संदर्भेष्विति** । रूपकस्वरूपं निरूपितं दशरूपके, 'अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते । रूपकं तत्समारोपाद्दशधैव रसाश्रयम् ॥' इति । भावप्रकाशेऽपि, 'रूपकं तद्भवेद्रूपं दृश्यत्वात्प्रेक्षकैरिदम् । रूपकत्वं तदारोपात्कमलारोपवन्मुखे ॥' इति । दश रूपकाणि तु, 'नाटकं सप्रकरणं भाणः प्रहसनं डिमः । व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ॥' इति । दशानां रूपकाणां समाहारो दशरूपकम् । समाहारस्यैकत्वादेकवचनम् । पात्रादित्वात् स्त्रीत्वप्रतिषेधे नपुंसकत्वम् । श्रेयः अतिशयेन प्रशस्यमित्यर्थः ॥ ३० ॥

श्रेयस्त्वे हेतुं पृच्छति— **कस्मादिति** । हेतुमुपन्यस्यति-- **तदिति** ।

**ततोऽन्यभेदक्लृप्तिः ॥ ३२ ॥**

ततो दशरूपकादन्येषां भेदानां क्लृप्तिः कल्पनमिति। दशरूपकस्यैव हीदं सर्वं विलसितम्, यदुत कथाख्यायिके महाकाव्यमिति। तल्लक्षणं च नातीव हृदयंगममित्युपेक्षितमस्माभिः। तदन्यतो ग्राह्यम् ॥

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे
तृतीयोऽध्यायः ॥

**समाप्तं चेदं शारीरं प्रथममधिकरणम् ॥**

विशेषाणां भाषाभेदादिरूपाणाम्।

कथाख्यायिकादीनां महाकाव्यभेदानामस्मादेव वस्तुविन्यासकल्पनमिति प्रकारान्तरेणापि श्रेयस्त्वमस्य प्रतिपादयितुमाह— **तत इति**। **इदं सर्वमिति**। कथाख्यायिकादिर्महाकाव्यस्वरूपम्। विलसितमित्यस्य व्याख्यानं खण्डशः कृतमिति, यत् कथा चाख्यायिका च महाकाव्यमिति व्यपदिश्यते, तदिदं सर्वमिति व्याकृत्य योजनीयम्। यदि कथाख्यायिके महाकाव्ये तर्हि तल्लक्षणं किमिति न प्रदर्शितमिति तत्राह— **तल्लक्षणमिति**। यदि केनचित्तल्लक्षणमपेक्षितम्, तद्भामहालंकारादौ द्रष्टव्यमित्याह— **तदन्यत इति**। नाटकादिलक्षणं तु ग्रन्थविस्तरभयादस्माभिर्न लिखितम् ॥

इति कृतरचनायामिन्दुवंशोद्वहेन
त्रिपुरहरधरित्रीमण्डलाखण्डलेन।
ललितवचसि काव्यालंक्रियाकामधेना-
वधिकरणमयासीदादिमं पूर्तिमेतत् ॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्तिव्याख्यायां काव्यालंकारकामधेनौ शारीरं नाम
**प्रथममधिकरणम् ॥**

15250

## ॥ द्वितीयमधिकरणम् ॥

काव्यशरीरे स्थापिते काव्यसौन्दर्याक्षेपहेतवस्त्यागाय दोषा विज्ञातव्या इति दोषदर्शनं नामाधिकरणमारभ्यते ।

दोषस्वरूपकथनार्थमाह—

**गुणविपर्ययात्मानो दोषाः ॥ १ ॥**

गुणानां वक्ष्यमाणानां ये विपर्ययाः, तदात्मानो दोषाः ।

**अर्थतस्तदवगमः ॥ २ ॥**

गुणस्वरूपनिरूपणात्तेषां दोषाणामर्थादवगमोऽर्थात्सिद्धिः ।

निष्कलङ्कनिशाकान्तगर्वसर्वंकषप्रभाम् ।
कविकामगवीं वन्दे कमलासनकामिनीम् ॥

दोषदर्शनं द्वितीयमधिकरणमारभ्यते । अधिकरणद्वयसंबन्धमेव बोधयति— **काव्यशरीर इति** । सौन्दर्यस्य गुणालङ्कारघटितचारुत्वस्य आक्षेपः स्वस्थानात् प्रच्यावनं तस्य हेतवस्तथाविधा दोषाः कविना ज्ञातव्या इत्यनेन दोषज्ञानस्यावश्यकर्तव्यतोक्ता । तेषामज्ञाने परित्यागात्मनः फलस्य दुर्लभत्वादिति भावः । दृश्यन्तेऽस्मिन् दोषा इति दोषदर्शनम् । अधिकरणार्थे ल्युट् ।

दोषसामान्यलक्षणं वक्तुं सूत्रमवतारयति— **दोषस्वरूपेति । गुणानामिति** । विपरीयन्त इति विपर्ययाः विपरीताः । कर्मार्थेऽच्प्रत्ययः । त एवात्मानो येषां ते विपर्ययात्मनो विपरीतस्वरूपाः, न त्वभावरूपा इत्यर्थः । अनेन गुणविपरीतस्वरूपत्वं दोषसामान्यलक्षणमुक्तं भवति ।

ननु गुणेष्ववगतेषु तद्विपर्ययस्वरूपा दोषा विनापि लक्षणोदाहरणाभ्यां सामर्थ्यात् प्रेक्षावद्भिरुत्प्रेक्षितुं शक्यन्ते । किं लक्षणादिप्रपञ्चनेनेत्याशङ्कासूत्रमनुभाषते— **अर्थत इति** ।

किमर्थं ते पृथक् प्रपञ्च्यन्त इत्यत्राह—

**सौकर्याय प्रपञ्चः ॥ ३ ॥**

सौकर्यार्थः प्रपञ्चो विस्तरो दोषाणाम्। उद्दिष्टा लक्षणलक्षिता हि दोषाः सुज्ञाना भवन्ति।

पददोषान् दर्शयितुमाह—

**दुष्टं पदमसाधु कष्टं ग्राम्यमप्रतीतमनर्थकं च ॥ ४ ॥**

क्रमेण व्याख्यातुमाह—

**शब्दस्मृतिविरुद्धमसाधु ॥ ५ ॥**

शब्दस्मृत्या व्याकरणेन विरुद्धं पदम् असाधु।

यथा—'अन्यकारकवैयर्थ्यम्' इति। अत्र हि 'अषष्ठ्यतृतीया-

आशङ्कामिमामपाकर्तुमनन्तरसूत्रं व्याचष्टे— **सौकर्यार्थ** इति। दोषस्वरूपे हि प्रेक्षावतामुत्प्रेक्षितुं शक्येऽपि, व्युत्पित्सूनधिकृत्य प्रवृत्तत्वाच्छास्त्रस्य तैस्तु पदपदार्थवाक्यवाक्यार्थदोषाणां स्थूलसूक्ष्माणामुद्देशलक्षणपरीक्षाभिर्विना दुरवगमत्वात् तेषां दोषविवेकस्य सौकर्याय प्रपञ्च इत्यर्थः। **उद्दिष्टा इति**। उद्दिष्टाः नामतः परिगणिताः। लक्षिताः परस्परव्यावृत्ततया दर्शिताः। दोषाः, सुज्ञानाः सुखेन ज्ञातव्या भवन्ति। 'आतो युच्' इति खलर्थे युच्प्रत्ययः। अस्मिन्नधिकरणे लक्षणीया दोषाः काव्यस्यासाधुत्वापादकाः स्थूला इत्यवगन्तव्यम्। यद्वक्ष्यति— 'ये त्वन्ये शब्दार्थदोषाः सूक्ष्मास्ते गुणविवेचने वक्ष्यन्ते' इति ॥

शब्दार्थशरीरं हि काव्यम्। अत्र शब्दः पदवाक्यात्मकः। अर्थश्च पदार्थवाक्यार्थरूपः। तत्र पदपदार्थप्रतिपत्तिपूर्विका वाक्यवाक्यार्थप्रतिपत्तिरिति क्रममभिसंधाय प्रथमं पददोषान् प्रतिपादयितुमाह— **पददोषानिति**। दुष्टं पदमिति प्रत्येकं संबन्धनीयम् ॥

यथोद्देशं लक्षणं वक्तुमाह— **क्रमेणेति**। **शब्दस्मृतीति**। शब्दशास्त्रमर्यादामुल्लङ्घ्य प्रयुक्तं शब्दस्मृतिविरुद्धम्। तदुदाहरति— **अन्यकारकेति**।

स्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति दुका भवितव्यमिति।

## श्रुतिविरसं कष्टम् ॥ ६ ॥

श्रुतिविरसं श्रोत्रकटु पदं कष्टम्। तद्धि रचनागुम्भितमप्युद्वेजयति।

यथा— 'अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग्विशदः शशाङ्कः।'

## लोकमात्रप्रयुक्तं ग्राम्यम् ॥ ७ ॥

लोक एव यत्प्रयुक्तं पदम्, न शास्त्रे; यत् ग्राम्यम्।

यथा— 'कष्टं कथं रोदिति फूत्कृतेयम्।' अन्यदपि तल्लगल्लादिकं द्रष्टव्यम्।

## शास्त्रमात्रप्रयुक्तमप्रतीतम् ॥ ८ ॥

---

'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति आशीरादिषु परतोऽन्यपदस्य दुगागमेन भवितव्यम्। स तु न कृतः; 'दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः। षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥' इति कारकपदे परतो दुगागमो नियत इत्यन्यकारकपदमसाधु।

**श्रोत्रकट्विति**। कर्णोद्वेगकरमित्यर्थः। यदुक्तं भामहेन 'संनिवेशविशेषात्तु तदुक्तमभिशोभते।' इति, तन्निराचष्टे— **तद्धीति**। विशिष्टसंदर्भगर्भगतमपि सहृदयहृदयोद्वेगमाविर्भावयतीत्यर्थः। **अचूचुरदिति**। अत्र द्रागिति पदं कष्टम्।

ग्रामे भवं ग्राम्यमिति व्युत्पत्तिः; लोकमात्रसिद्धमित्यर्थः। **कष्टमिति**। अत्र फूत्कृतेति पदं ग्राम्यम्, तस्य काव्ये प्राचुर्येण प्रयोगादर्शनात्। '[1]ताम्बूल-

---

1 गल्लपदं कपोलार्थकम्। तल्ल अल्पमिति केचित्; तल्लशब्दस्तडागवाचीति कश्चित्। 'भल्लम्' इति भूयसां पाठः। 'भल्ल भद्रम्' इति, 'भल्लं समीचीनम्' इति च प्रकाशव्याख्यातारः।

**शास्त्र एव प्रयुक्तं यत्, न लोके; तत् अप्रतीतम्।**

**यथा—**

**'किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः।**
**गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः॥'**

**अत्र रूपस्कन्धनान्तरीयकपदे न लोक इत्यप्रतीतम्॥**

## पूरणार्थमनर्थकम्॥ ९॥

**पूरणमात्रप्रयोजनमव्ययपदमनर्थकम्। दण्डापूपन्यायेन पदमन्यदप्यनर्थकमेव।**

भृतगल्लोऽयं तल्लं जल्पति मानवः' इत्यादौ यत् तल्लगल्लादिपदं प्रयुज्यते, तदपि ग्राम्यं द्रष्टव्यम्।

**किं भाषितेनेति**। इयं हि कस्याश्चिद्विप्रलब्धायाः शठनायकं प्रत्युक्तिः।[1]रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणाः पञ्च स्कन्धाः सौगतमते प्रसिद्धाः। अत्र विषयेन्द्रियलक्षणस्य रूपस्कन्धस्य गुणा मे न सन्ति। गुणनान्तरीयकम्, अन्तरशब्दोऽत्र विनार्थः। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः। न अन्तरं नान्तरम्। ततो भवार्थे छप्रत्यये स्वार्थिके च कप्रत्यये सति नान्तरीयकमिति रूपं सिद्धम्। अविनाभूतमित्यर्थः। प्रेम च गुणनान्तरीयकमिति हेतोः, उपालम्भो निन्दावचनम्, ते तव नास्ति। व्यापकपरावृत्तौ व्याप्यपरावृत्तिरुचितेति भावः। अत्र रूपस्कन्धनान्तरीयकपदे अप्रतीते।

**पूरणार्थमिति**। पूरणं पादपूरणम् अर्थः प्रयोजनं यस्येति विग्रहः। **दण्डापूपेति**। दण्डप्रोता अपूपा दण्डापूपाः। तथा च दण्डानयनप्रेरणायां दण्डानयनेनैवापूपानयने सिद्धे पुनरपूपानयनप्रेरणं व्यर्थमिति दण्डापूपन्यायः। अथवा, अपूपदण्डो मूषकैर्भक्षित इत्युक्ते पुनरपूपभक्षणप्रश्नवचनं व्यर्थमिति दण्डापूपन्यायः। तन्न्यायेन चादीनामसत्त्ववचनानामसत्यपि प्रयोगे तदर्थस्यान्यतोऽवग-

1. 'विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च। भिक्षूणां शाक्यसिंहेन स्कन्धाः पञ्च प्रकीर्तिताः।'

यथा—'उदितस्तु हास्तिकविनीलमयं तिमिरं निपीय किरणैः सविता।'

अत्र तुशब्दस्य पादपूरणार्थमेव प्रयोगः।

**न वाक्यालङ्कारार्थम् ॥ १० ॥**

अपवादार्थमिदम्।

वाक्यालङ्कारप्रयोजनं तु नानर्थकम्।

यथा—'न खल्विह गतागता नयनगोचरं मे गता' इति।

तथा हि खलु हन्तेति।

संप्रति पदार्थदोषानाह—

**अन्यनेयगूढार्थाश्लीलक्लिष्टानि च ॥ ११ ॥**

दुष्टं पदमित्यनुवर्तते। अर्थाच्च विभक्तिविपरिणामः। अन्यार्थादीनि पदानि दुष्टानीति सूत्रार्थः।

---

तत्वान्नैराकाङ्क्ष्येण वाक्यार्थविश्रान्तिसिद्धाविह प्रयुज्यमानानां तेषामव्ययानां द्योत्यराहित्येनानर्थकत्व भवति; किमु वक्तव्यमात्मोपजीव्यवाच्यार्थविरहे वाचकानां पदानामनर्थकत्वमिति भाव.। **उदित इति**। हस्तिनां समूहो हास्तिकम्। 'अचित्तहस्तिधेनोष्ठक्' इति ठक्प्रत्ययः। हास्तिकं गजता बृन्दे' इत्यमरः। तद्वद्विनीलम्। **अत्र तुशब्दस्येति**। भेदावधारणादेर्द्योत्यस्यानाकाङ्क्षितत्वादित्यर्थः।

**वाक्येति**। पूरणं तु प्रतिभादौर्बल्यसूचकतया काव्यविद्भिः प्रयोजनत्वेन नाङ्गीकृतम्।

पदार्थदोषान् प्रपञ्चयितुमाह— **संप्रतीति**। अन्यादिभिस्त्रिभिरर्थशब्दः प्रत्येकमभिसंबन्धनीयः। तेषामश्लीलक्लिष्टशब्दयोरिवार्थपदप्रयोगमन्तरेण न हठादर्थप्रतिपत्तिहेतुत्वमित्यर्थपदं प्रत्युक्तम्। **विभक्तीति**। अत्र प्रथमाया विभक्तेरभेदेन विपरिणामासंभवात् वचनविपरिणाम इति व्याख्येयम्। **अन्यार्थादीनीति**। अर्थदौष्ट्यात् पदान्यपि दुष्टानीत्यर्थः।

एषां क्रमेण लक्षणान्याह—

रूढिच्युतमन्यार्थम् ॥ १२ ॥

रूढेः च्युतं रूढिच्युतं रूढिमनपेक्ष्य यौगिकार्थमात्रोपादानात्, अन्यार्थं पदम्। स्थूलत्वात् सामान्येन घटशब्दः पटशब्दार्थ इत्यादिक-मन्यार्थं नोक्तम्।

यथा—'ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसंगतानाम्।'

अत्र आवहतिः करोत्यर्थो धारणार्थे प्रयुक्तः, प्रस्मरतिर्विस्मारणार्थः प्रकृष्टस्मरण इति[1]।

रूढिः प्रसिद्धिः, ततः च्युतं रूढिच्युतम्। रूढेषु पदेषु रूढिमनादृत्य यौगिकार्थे यत् प्रयुज्यते, तदन्यार्थं पदम्। ननु यत घटादिपदं पटादिषु प्रयुज्यते, तत् अन्यार्थं पद दुष्टमिति किमिति नोच्यत इत्याशङ्क्याह— स्थूलत्वादिति। पटादिषु प्रयुज्यमानं घटादिपदमन्यार्थमिति सामान्येन नोक्तम्। कुतः? स्थूलत्वात् उत्तानबुद्धिभिरुपलब्धुं शक्यत्वात्। ये केचित् स्थूलमपि दोषमविज्ञाय तथा प्रयुञ्जते, ते पुनरविवेकिनः शासनयोग्या न भवन्तीति प्राक् प्रतिपादितम्। उदाहरणमुपदर्शयितुमाह— यथेति। ये प्रियसगतानां प्रणयप्रयुक्तसबन्धाना प्रस्मरन्ति प्रकर्षेण स्मरन्ति। 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी। ते जनाः उच्चावचमनेकभेदम्। 'उच्चावचं नैकभेदम्' इत्यमरः। दुःखम् आवहन्ति धारयन्तीति कवेर्विवक्षितोऽर्थः। अन्यार्थत्वमुपपादयति— अत्रेति। आङ्पूर्वो वहिधातुः करोत्यर्थे रूढः। तथा च प्रयोगः, 'व्रीडमावहति मे स संप्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि।' इति। स च रूढिमनादृत्य धारणे यौगिकार्थे प्रयुक्त इत्यन्यार्थत्वम्। प्रपूर्वः स्मरतिरपि विस्मरणार्थे रूढः। तथाच प्रयोगः, 'नाक्षराणि पठता किमपाठि प्रस्मृतः किमथवा पठितोऽपि।' इति। स च रूढिमगणयित्वा प्रकृष्टस्मरणे यौगिकार्थे प्रयुक्त इत्यन्यार्थत्वम्। किंच 'रूढिच्युतम्' इत्यत्र रूढीति सामान्येनोपात्तत्वाद्योगरूढिरपि परिगृह्यते। तेन पङ्कजादयः शब्दाः कुमुदादिषु न प्रयोज्याः।

1. इद च नेयार्थं प्रकाशोक्तेषु अवाचकप्रभेदेषु अन्यतमम्। प्रकारान्तराणि तु तत एवावसेयानि।

## कल्पितार्थं नेयार्थम् ॥ १३ ॥

अश्रौतस्याप्युन्नेयस्य पदार्थस्य कल्पनात् कल्पितार्थं नेयार्थम्।

यथा--

'सपदि पङ्क्तिविहङ्गमनामभृत्तनयसंवलितं बलशालिना।
विपुलपर्वतवर्षि शितैः शरैः प्लवगसैन्यमुलूकजिता जितम्॥'

अत्र विहङ्गमश्चक्रवाकोऽभिप्रेतः, तन्नामानि चक्राणि, तानि बिभ्रतीति विहङ्गमनामभृतो रथाः, पङ्क्तिः दश विहङ्गमनामभृतो रथा यस्य स पङ्क्तिविहङ्गमनामभृत् दशरथः, तत्तनयाभ्यां रामलक्ष्मणाभ्यां संवलितं प्लवगसैन्यं जितम्। उलूकजिता इन्द्रजिता। कौशिकशब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः। ननु चैवं रथाङ्ग-

---

नेयार्थं लक्षयति— कल्पितार्थमिति। अश्रौतस्येति। संकेतसहायः शब्दव्यापारः, तद्विशिष्टः शब्दो वा श्रुतिः। तत आगतोऽर्थः श्रौतः, स न भवतीति अश्रौतः अनभिधेय इत्यर्थः। नन्विदमश्रौतत्वमर्थस्य किं लाक्षणिकत्वम्? नेत्याह— उन्नेयस्येति। 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इत्येवंलक्षणलक्षणाकक्ष्यामधिक्षिप्य कस्यचिदर्थस्य कल्पने कल्पितार्थम्, न तु लाक्षणिकार्थमित्यर्थः। उदाहरणमाह— यथेति। उदाहरणवाक्यार्थं विवृणोति— अत्रेति। पक्षिसामान्यवाचिना विहङ्गमपदेन तद्विशेषश्चक्रापरनामा चक्रवाको लक्ष्यते। 'कोकश्चक्रश्चक्रवाकः' इत्यमरः। तस्य नामेव नाम येषां तानि तन्नामानि चक्राणीत्यर्थः। पङ्क्तिरिति। पङ्क्तिच्छन्दसः पादस्य दशाक्षरात्मकत्वात् पङ्क्तिपदेन दशसंख्या लक्ष्यते। विपुलपर्वतवर्षीति प्लवगसैन्यविशेषणम्। कौशिकशब्देनेति। 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः। कौशिकशब्देनेन्द्रोलूकयोरभिधानादित्यर्थः। उलूकशब्देन कौशिकशब्द उन्नीयते, तेनेन्द्रोऽभिधीयत इति उलूकजित्पदेन इन्द्रजिदुन्नीयत' इत्यभिप्रायः। एवं तर्हि प्राचीनकविप्रयोगः पर्याकुलः स्यादिति शङ्कते— नन्विति। रथाङ्गनामादीनामित्यादिपदेन रथाङ्गपाणिप्रभृतीनां परिग्रहः। रथाङ्गनामादिपदानां चक्रवाकादौ

नामादीनामपि प्रयोगोऽनुपपन्नः; न; तेषां निरूढलक्षणत्वात्[1]।

**अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ॥ १४ ॥**

यस्य पदस्य लोके अर्थः प्रसिद्धश्चाप्रसिद्धश्च, तत् अप्रसिद्धेऽर्थे प्रयुक्तं गूढार्थम्[2]।

---

निरूढत्वेन रूढ्या योगस्य निगीर्णत्वान्न काचिदनुपपत्तिरिति परिहरति—नेति। निरूढा लक्षणा येषामिति बहुव्रीहिः। लक्षणा हि रूढिप्रयोजनवशात् द्विविधा भवति। तत्र रूढलक्षणा कुशलादय शब्दाः प्रयोगप्राचुर्यबलेन वाचकशब्दवत्प्रयुज्यन्ते। प्रयोजनलक्षणास्तु 'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षणम्' इत्यादौ विकसितादयः शब्दाः स्मितविलासादिलक्षकतयाद्यापि प्रयुज्यन्ते। तदुक्तम्, '[3]निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते सांप्रत काश्चित्काश्चिन्नैव त्वशक्तितः॥' इति।

गूढार्थं लक्षयितुमाह— अप्रसिद्धेति। अभिमतमनेकत्वमर्थस्य दर्श-

---

1 अय भावः—'निरूढा लक्षणा काश्चित्' इत्युक्तरीत्या रूढिप्रयोजनाभ्यां विना यत्र निषिद्धा लक्षणा स्वीक्रियते, तत्रैव नेयार्थत्वम्। सपदीत्युदाहरणे च विहङ्गमादिपदाना तत्र तत्र लक्षणोपासने न रूढिः, नवा प्रयोजन किमपि। मुख्यशब्दार्थातिरेकेण कस्याप्यर्थस्याप्रतीतेः। अतश्च तत्र भवति नेयार्थत्व दोष। रथाङ्गनामादिषु तु रूढिरिति न दोष। दूषकताबीज च अशक्तवक्तृकत्वज्ञानाद्रसप्रकर्षबाधविघात.। वृत्त्यभावेन अर्थानुपस्थितिस्तदिति केचित्। एतेन 'न तु लाक्षणिकार्थमित्यर्थः' इति कामधेनुरपि व्याख्याता। समस्तमेक पदमिति वैयाकरणरीतिमाश्रित्य पदार्थदोषावसरे अस्योपन्यासः। हेमचन्द्रस्तु विशिष्टाभिप्रायेण मतान्तरानुसारेण वा इदमेव पद्यं वाक्यदोषप्रकरणे निरूपितवान्।

2. 'अस्य दूषकताबीज च प्रसिद्धस्यैव द्रागुपस्थित्या विवक्षितस्य विलम्बेनोपस्थितिः। अत एव यमकादावदोषत्वम्, तत्रोपस्थितिविलम्बस्यापि सहृदयसमतत्वेनाविलम्बानुद्देश्यत्वात्' इति प्रदीपकारः। ननु प्रसिद्धस्यापि अविवक्षितार्थस्य कथमुपस्थितिः, 'शब्दार्थस्यानवच्छेदे' इति प्रकरणादेर्नियामकस्य सत्त्वादिति चेत्, न; तुल्यप्रसिद्धिकानेकार्थेष्वेव तथा नियमस्य तदर्थत्वादिति दिक्।

3. काश्चिल्लक्षणाः निरूढाः प्रसिद्धाः। ताश्च बोधकत्वरूपसामर्थ्यात् अभिधासमकक्ष्याः। काश्चिच्च प्रयोजनवशात् सांप्रत क्रियन्ते। काश्चिदपि रूढिप्रयोजनाभावेऽपि वक्तुरशक्तिमात्रेण नैव क्रियन्त इति कारिकार्थः। 'निरूढलक्षणा तु शक्तिता नाममात्रेण भिद्यते' इति भट्ट।

**यथा— 'सहस्रगोरिवानीकं दुःसहं भवतः परैः।' इति।**

**सहस्रं गावोऽक्षीणि यस्य स सहस्रगुरिन्द्रः, तस्येवेति गोशब्दस्याक्षिवाचित्वं कविष्वप्रसिद्धमिति।**

**असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्[1] ॥ १५ ॥**

**यस्य पदस्यानेकार्थस्यैकोऽर्थोऽसभ्यः स्यात्, तत् असभ्यार्थान्तरम्।**

**यथा— 'वर्चः' इति पदं तेजसि विष्ठायां च।**

**यत्तु पदं सभ्यार्थवाचकमप्येकदेशद्वारेणासभ्यार्थं स्मारयति, तत् असभ्यस्मृतिहेतुः।**

**यथा— 'कृकाटिका' इति।**

---

यति— **प्रसिद्धश्चेति**। उदाहरणमुपदर्शयितुमाह— **यथेति**। **गोशब्दस्येति**। 'गौर्नाके वृषभे चन्द्रे वाग्भूदिग्धेनुषु स्त्रियाम्। द्वयोस्तु रश्मिदृग्बाणस्वर्गवज्राम्बुलोमसु' इत्यभिधाने सत्यपि गोशब्दस्य प्राचुर्येणाक्षिण प्रयोगादर्शनादक्षिवाचकत्वमप्रसिद्धमित्यर्थः। एतेन '[2]तीर्थान्तरेषु स्नानेन समुपार्जितसत्पथः। सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्' इत्यादिषु हन्तीत्यादीनां गमनाद्यर्थेषु प्रयोगाः प्रत्युक्ताः।

अश्लीलं लक्षयितुमाह— **असभ्येति**। सूत्रार्थं विवृण्वन् क्रमेण लक्षणोदाहरणे दर्शयति— **यस्येति**। यस्यानेकार्थवाचकस्य पदस्यैकोऽर्थोऽसभ्यः स्यात्, तदसभ्यार्थान्तरं पदमश्लीलम्। **वर्च इति**। 'वर्चांसि ज्वालविड्भसिः' इत्यभिधानाज्ज्वालप्रभावाचकत्वेऽपि विड्वाचितया वर्च इति पदमसभ्यार्थान्तरम्। **यत्त्विति**। सभायां साधुः सभ्यः। 'सभाया यः' इति यप्रत्ययः। यत्तु पदं सभ्यार्थवाचकमप्येकदेशेन यद्यसभ्यार्थस्मृतिं जनयेत्, तदप्यश्लीलम्। **कृकाटिकेति**। 'प्रेतयानं खटिः काटिः' इति वैजयन्त्यां शवयानपर्यायत्वेनाभिधानात्

---

1. अश्रीरस्यास्तीत्यर्थे सिध्मादित्वाल्लच्प्रत्ययः। कपिलादित्वाद्रेफस्य लत्वम्।
2. इद च पद्यसमर्थोदाहरणतया प्रकाशे उपात्तम्।

**न गुप्तलक्षितसंवृतानि[1] ॥ १६ ॥**

अपवादार्थमिदम् । गुप्तं लक्षितं संवृतं च नाश्लीलम् ॥

एषां लक्षणान्याह—

**अप्रसिद्धासभ्यं गुप्तम् ॥ १७ ॥**

अप्रसिद्धासभ्यार्थान्तरं पदमप्रसिद्धासभ्यं यत्, तत् गुप्तम् ।

यथा— 'संबाधः' इति पदम् । तद्धि संकटार्थे प्रसिद्धम्, न गुह्यार्थमिति ।

**लाक्षणिकासभ्यं लक्षितम् ॥ १८ ॥**

तदेवासभ्यार्थान्तरं लाक्षणिकासभ्यार्थान्वितं पदं लक्षितम् ।

---

कण्ठापरभागवाचकमपि कृकाटिकापदं काटीत्येकदेशेनासभ्यार्थस्मृतिहेतुरित्यश्लीलमित्यभिप्रायः ।

अश्लीलस्य क्वचिदपवादं वक्तुमाह— **न गुप्तेति** । वृत्तिः स्पष्टार्था ।

**अप्रसिद्धेति** । यस्यानेकार्थस्य पदस्यैकोऽर्थोऽसभ्योऽपि यद्यप्रसिद्धो भवति, तदप्रसिद्धासभ्यं पदं गुप्तमित्यर्थः । तदिदमभिसंधायाह— **असभ्यार्थान्तरमिति** । **संबाध इति** । 'लेशेऽपि गन्धः संबाधो गुह्यसंकटयोर्द्वयोः ।' इत्यभिधाने सत्यपि 'संबाधे सुरभीणाम्' 'आसने मित्रसबाधे' इत्यादिषु प्रयोगप्राचुर्यात् संबाधशब्दः संकटार्थः प्रसिद्धः; तदभावात् गुह्यार्थोऽप्रसिद्ध इत्यर्थः ।

**लाक्षणिकासभ्यमिति** । लक्षणया सान्तरार्थनिष्ठशब्दव्यापारेण प्रतिपाद्यं लाक्षणिकम् । अध्यात्मादित्वात भवार्थे ठञ् । तथाविधमसभ्यमर्थान्तरं यस्य, तत् लक्षितमिति सूत्रार्थः । अमुमर्थमभिसंधायाह— **तदेवेति** । लाक्षणिकं

[1] 'दूषकताबीज त्वनुभवसिद्धरसापकर्षकतादृशार्थोपस्थितिः । नीरसे तु चमत्कारापकर्षकत्व तस्याः । अथवा तादृशार्थोपस्थित्या श्रोतुर्वैमुख्य तद्बीजम् । अत शमकथायां दोषत्वाभावः, तादृशोपस्थितेः शमपोषकत्वात् । भाव्यमङ्गलादिसूचने कामशास्त्रस्थितौ च न दोषत्वम्, श्रोतुर्वैमुख्याभावात् । शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु तु सवीतगुप्तलक्षितेषु असभ्यार्थानुपस्थितिः' इति प्रदीपः ।

यथा— 'जन्मभूः' इति। तद्धि लक्षणया गुह्यार्थम्, न स्वशक्त्येति।

## लोकसंवीतं संवृतम् ॥ १९ ॥

लोकेन संवीतं लोकसंवीतं यत्, तत् संवृतम्।

यथा— 'सुभगा, भगिनी, उपस्थानम्, अभिप्रेतम्, कुमारी, दोहदः' इति

अत्र श्लोकः—

'संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम्।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना ॥'

## तत्त्रैविध्यं व्रीडाजुगुप्सामङ्गलातङ्कदायिभेदात् ॥ २० ॥

तस्याश्लीलस्य त्रैविध्यं भवति, व्रीडाजुगुप्सामङ्गलातङ्कदायिनां भेदात्।

---

च तत् असभ्य चेति कर्मधारयः। अर्थविशेषणम्। तेनार्थेनान्वितं तादृशार्थप्रतिपादकमित्यर्थः। जन्मभूशब्देन जननस्थानसामान्यमभिधया प्रतिपाद्यते। तद्विशेषस्तु लक्षणयेति व्याचष्टे—तद्धीति। न स्वशक्त्येति। मुख्यव्यापारेणेत्यर्थः।

लोकेन संवीतम् आवृतं परिगृहीतमित्यर्थः। सुभगादिपदान्येकदेशेन असभ्यार्थस्मृतिहेतुत्वेऽपि लोकपरिगृहीतत्वात्प्रयोज्यानि। तदुक्तं दण्डिना, 'भगिनीभगवत्यादि सर्वत्रैवानुमन्यते।' इत्यादि। दोहद इति। 'हद पुरीषोत्सर्गे' इति धातुं स्मारयन्नेकदेशेन असभ्यार्थस्मृतिहेतुः।

अत्र प्राचीनाचार्यसंवादं प्रकटयति— अत्र श्लोक इति। स्पष्टोऽर्थः।

द्विविधमश्लीलं त्रेधा विभजते— तत्त्रैविध्यमिति। तिस्रो विधाः प्रकारा यस्य तत् त्रिविधम्। 'विधा विधौ प्रकारे च' इत्यमरः। तस्य भावस्त्रैविध्यम्। ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। तस्याश्लीलस्य त्रैविध्यम्। अमङ्गलस्यातङ्कः शङ्का। 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः। दायिशब्दः प्रत्ये-

किंचित् व्रीडादायि। यथा— 'वाक्काटवम्' इति।

किंचित् जुगुप्सादायि। यथा— 'कपर्दकः' इति।

किंचित् अमङ्गलातङ्कदायि। यथा— 'संस्थितः' इति।

## व्यवहितार्थप्रत्ययं क्लिष्टम् ॥ २१ ॥

अर्थस्य प्रतीतिः अर्थप्रत्ययः। स व्यवहितो यस्मात् भवति, तत् व्यवहितार्थप्रत्ययं क्लिष्टम्।

यथा—'दक्षात्मजादयितवल्लभवेदिकानां ज्योत्स्नाजुषां जललवास्तरलं पतन्ति।'

दक्षात्मजाः ताराः, तासां दयितो दक्षात्मजादयितश्चन्द्रः, तस्य वल्लभाश्चन्द्रकान्ताः, तद्वेदिकानामिति। अत्र हि व्यवधानेनार्थप्रत्ययः, अन्यत्र अरूढत्वात्। अरूढावपि यतोऽर्थप्रत्ययो झटिति, न

कमभिसंबध्यते। तत्राद्यमुदाहर्तुमाह— किंचिदिति। वाक्काटवमिति। कटोर्भावः काटवम्, वाचः काटवं वचस्तैक्ष्ण्यमित्यर्थः। अत्र काट इत्येकदेशेन लिङ्गप्रतीतेर्व्रीडादायि. 'काटश्चार्णवश्च' इत्यत्र मन्त्रभाष्ये तथा दर्शनात्। द्वितीयं दर्शयितुमाह— किंचिदिति। पर्दः पायवीयपवनध्वनिः। 'पर्दस्तु गुदजे शब्दे कुर्दः कुक्षिजनिःस्वने' इति वैजयन्ती। अवशिष्टमश्लीलं स्पष्टयति— किंचिदिति। 'प्रमीतः संस्थितो मृतः' इत्यमरः।

क्लिष्टमाचष्टे— व्यवहितेति। समासार्थं विग्रहेण दर्शयति— अर्थस्य प्रतीतिरिति। प्रत्ययोऽत्र ज्ञानम्। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। उदाहरति— दक्षात्मजेति। ननु नेयार्थे क्लिष्टमिदं किमिति नान्तर्भवति, व्यवहितार्थप्रत्ययहेतुत्वाविशेषादित्याशङ्क्य ततो वैषम्यं दर्शयन् लक्ष्ये लक्षणमनुगमयति— अत्र हि व्यवधानेनेति। व्यवधानमर्थप्रतिपत्तेर्विलम्बः। विलम्बेनार्थाभिधायकं क्लिष्टम्, नेयार्थं तु कल्पितार्थमिति ततो भेदः। अन्यार्थेऽपि चेदं नान्तर्भवतीत्याह—अन्यत्रेति। प्रकृतादर्थादर्थान्तरे क्वचिदप्यरूढत्वात् अप्रसिद्धत्वात् विलम्बेनापि योगवशात् प्रकृतमर्थमभिधत्त इत्यर्थः। अप्रसि-

तत् क्लिष्टम् । यथा- 'काञ्चीगुणस्थानमनिन्दितायाः' इति ।

**अन्त्याभ्यां वाक्यं व्याख्यातम् ॥ २२ ॥**

अश्लीलं क्लिष्टं चेत्यन्त्ये पदे, ताभ्यां वाक्यं व्याख्यातम् । तदप्यश्लीलं क्लिष्टं च भवति ।

अश्लीलं यथा—

'न सा धनोन्नतिर्या स्यात्कलत्ररतिदायिनी ।
परार्थबद्धकक्ष्याणां यत्सत्यं पेलवं धनम् ॥'

'सोपानपथमुत्सृज्य वायुवेगः समुद्यतः ।
महापथेन गतवान्कीर्त्यमानगुणो जनैः ॥'

द्रुमप्यविलम्बेनार्थाभिधायकं चेन्न तत क्लिष्टमित्याह— **अरूढावपीति** । उदाहरति— **यथेति** ।

अथ अश्लीलक्लिष्टाख्यदुष्टपदद्वयलक्षणसाम्यात् अश्लीलक्लिष्टवाक्यद्वयमपि लक्षितप्रायमेवेत्युपपादयितुं सूत्रमुपादत्ते— **अन्त्याभ्यामिति** । प्रतिपत्तिलाघवार्थमप्रकरणेऽप्यभिधानमित्यवगन्तव्यम् । अश्लीलं वाक्यमपि त्रिविधम्, तत्र व्रीडादायि अश्लीलमुदाहरति— **यथेति** । सा तादृशी । धनोन्नतिः अर्थसंपत्तिः । न भवति । या कलत्ररतिदायिनी कलत्रस्य रतिं प्रीतिं दातुं शीलमस्या इति कलत्ररतिदायिनी, न तु परप्रीतिदायिनी यस्मात्; तस्मात् परार्थबद्धकक्ष्याणां परेषामर्थे प्रयोजने बद्धा कक्ष्या कच्छो यैस्तेषां परोपकारबद्धप्रतिज्ञानामित्यर्थः । 'कक्ष्या कच्छे वरत्रायाम्' इति वैजयन्ती । धनम् अर्थः । यत्सत्यं परमार्थतः । पेलवं मनोज्ञमिति प्रकृतार्थः । अर्थान्तरं तु— साधनस्य शेफस उन्नतिः । 'साधनमुपगमनत्योः शेफसि सिद्धौ निवृत्तिदापनयोः' इति नानार्थमाला । यस्मात् कलत्रस्य रतिं सुरतं दातुं शीलमस्या इति तादृशी न भवति; तस्मात् परासामर्थे बद्धकक्ष्याणां परस्त्रीवशंवदचित्तानामित्यर्थः । धनं पेलवं विरलं भवति । 'पेलवं विरलं तनु' इत्यमरः । अत्र व्रीडादायित्वमतिरोहितम् । अवशिष्टमश्लीलद्वयमुदाहरति— **सोपानेति** । सोपानपथमुत्सृज्य । वायुवेगः वायोर्वेग इव

क्लिष्टं यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

एतान् पदपदार्थदोषान् ज्ञात्वा कविस्त्यजेदिति तात्पर्यार्थः ॥

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने
द्वितीयेऽधिकरणे प्रथमोऽध्यायः ।

वेगो यस्य स तादृशः, समुद्यतः सन्, जनैः स्तूयमानगुणः सन्, महापथेन राजमार्गेण गतवानिति प्रकृतार्थः । वायुवेगः अपानपथमुत्सृज्य समुद्यत इति जुगुप्सादायि । महापथेन परलोकमार्गेण गतवानित्यमङ्गलातङ्कदायि ।

क्लिष्टमुदाहरति— **धम्मिल्लस्येति** । कुरङ्गशावाक्ष्याः धम्मिल्लस्य संयतकचनिचयस्य । अपूर्वोऽदृष्टचरो बन्धो ग्रथनं तस्य व्युत्पत्तेश्चातुर्यस्य । शोभां प्रेक्ष्य । कस्य मानसं निकामं न रज्यति सर्वस्यापि मानसं रज्यतीत्यर्थः । रज्यतीति कर्मकर्तरि रूपम् । 'कुषिरजोः प्राचां श्यन् परस्मैपदं च' इति परस्मैपदम् । अपूर्वबन्धव्युत्पत्तेरिति धम्मिल्लविशेषणं वा । अत्रान्वयव्यवधानान्न हाठिकी वाक्यार्थप्रतिपत्तिरिति स्पष्टमेव क्लिष्टत्वम् । ननु किं फलममीषां दोषाणामवबोधनेनेत्याशङ्क्य, परित्याग एव फलमित्याह— **एतानिति** ।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति
व्याख्यायां काव्यालंकारकामधेनौ दोषदर्शने
द्वितीयेऽधिकरणे प्रथमोऽध्यायः ॥



# द्वितीयोऽध्यायः ॥

पदपदार्थदोषान प्रतिपाद्य वाक्यदोषान् दर्शयितुमाह---

**भिन्नवृत्तयतिभ्रष्टविसंधीनि वाक्यानि ॥ १ ॥**

दुष्टानीत्यभिसंबन्धः ।

क्रमेण व्याचष्टे---

**लक्षणच्युतवृत्तं भिन्नवृत्तम् ॥ २ ॥**

स्वस्माल्लक्षणाच्च्युतं वृत्तं यस्मिन्, तत् स्वलक्षणच्युतवृत्तं वाक्यं भिन्नवृत्तम् ।

यथा--'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ।'

वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धम् । तच्च कृतमिति भिन्नवृत्तत्वम् ।

---

चिन्तयामि चिदाकाशचन्द्रलेखां सरस्वतीम् ।
शिरसा श्लाघनाद्यस्याः सार्वज्ञ्यं समवाप्यते ॥

अध्यायद्वयसौहार्दमुन्मुद्रयति -- **पदपदार्थेति** । पदपदार्थदोषनिरूपणानन्तरं वाक्यवाक्यार्थदोषनिरूपणं लब्धावसरमिति सगतिः । वाक्यदोषानुद्दिशति---**भिन्नवृत्तेति** । 'दुष्टं पदम्' इत्यादिसूत्रात दुष्टमित्येतत् वचनविपरिणामेन वाक्यविशेषणतयानुवर्तत इत्याह---**दुष्टानीति** ।

यथोद्देशमेषा लक्षणानि दर्शयिष्यन्, अनन्तर[illegible]वतारयति-- **क्रमेणेति** । **लक्षणच्युतवृत्तमिति** । लक्षणहीनवृत्तानुबन्धि वाक्यमित्यर्थ । उदाहरति-- **यथेति** । **अयि पश्यसीति** । सुमनोमालभारिणीमित्यत्र "इष्टकेषीकामालानां चिततूलभारिषु" इति मालाशब्दस्य ह्रस्वः । वैतालीयलक्षणं प्रागुक्तम् । तत्र 'ताश्च समे स्युर्नो निरन्तरा' इति समपादे लघ्वक्षरषट्कस्य नैर-

**विरसविरामं यतिभ्रष्टम् ॥ ३ ॥**

विरसः श्रुतिकटुः विरामो यस्मिन्, तत् विरसविरामं यतिभ्रष्टम्।

**तद्धातुनामभागभेदे स्वरसंध्यकृते प्रायेण ॥ ४ ॥**

तत् यतिभ्रष्टं धातुभागभेदे नामभागभेदे च सति भवति स्वरसंधिना अकृते प्रायेण बाहुल्येन।

धातुभागभेदे मन्दाक्रान्तायां यथा-

'एतासां राजति सुमनसां दाम कण्ठावलम्बि।'

नामभागभेदे शिखरिण्यां यथा--

'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः।'

---

न्तर्यं निषिद्धम्। अत्र 'अविरलसुम--' इति समपादे षडपि प्रयुक्तानीति लक्षणच्युतत्वम् ॥

द्वितीयं व्याख्यातुं सूत्रमुपादत्ते-- **विरसविराममिति**। विरामो विच्छेदनियमः। शेषं सुगमम्।

तद्विभागं दर्शयितुमाह— **तदिति**। धातु भूवादि। नाम प्रातिपदिकम्। धातोः प्रातिपदिकस्य वा भागतो भेदे अंशतो विच्छेदे। भागभेदमेव विशिनष्टि-- **स्वरसंध्यकृत इति**। स च भागभेदो यदि स्वरसंधिना कृतो न स्यात्, तस्मिन् भागभेदे सति यतिभ्रष्टं नाम दुष्टं भवति। स्वरसंधिकृते तु भागभेदे न दुष्टमिति सूचितम्। तत्र प्रथममुदाहर्तुमाह--- **धातुभागभेद इति**। **एतासामिति**। मन्दाक्रान्ताख्यमिदं वृत्तम्। 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेत्' इति तल्लक्षणादादितश्चतुर्भिः, ततः षड्भिः, ततः सप्तभिर्वर्णैर्विरामः कर्तव्यः। तथा सति 'एतासां रा-' इत्यत्र धातुभागभेदे प्राप्तस्य तस्य वैरस्यादिदं वाक्यं यतिभ्रष्टं नाम दुष्टं भवति। द्वितीयमुदाहरति-- **नामभागभेद इति। कुरङ्गाक्षीणामिति**। शिखरिणीवृत्तमिदम्। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणादादितः षड्भिः, तत एकादशभिर्यतिः कर्तव्या। ततश्च

मन्दाक्रान्तायां यथा—

'दुर्दर्शश्चक्रशिखिकपिशः शार्ङ्गिणो बाहुदण्डः।'

धातुनामभागपदग्रहणात् तद्भागातिरिक्तभेदे न भवति यतिभ्रष्टत्वम्।

यथा मन्दाक्रान्तायाम्—

'शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः।'

शिखरिण्यां यथा—

'विमिश्रः श्यामान्तेष्वररपुटचीत्कारविरुतैः।'

स्वरसंध्यकृत इति वचनात् स्वरसंधिकृते भेदे न दोषः।

यथा—'किंचिद्भावालसमसरलं प्रेक्षितं सुन्दरीणाम्।'

---

'कुरङ्गाक्षीणां ग—' इत्यत्र प्रातिपदिकभागभेदे प्राप्तायास्तस्या वैरस्यात् यतिभ्रष्टं भवति। उदाहरणान्तरमाह— दुर्दर्श इति। मन्दाक्रान्तालक्षणमुक्तम्। 'दुर्दर्शश्च' इत्यत्र विरामो विरसः। ननु पदभागभेद इति सूत्रकरणे धातुनाम्नोरुभयोरपि संग्रहाल्लाघवं भवति, किं धातुनामग्रहणगौरवेणेत्याशङ्क्य, पदग्रहणे प्रकृतिप्रत्ययमध्यविरामेऽपि यतिभ्रंशः स्यात्; स मा भूदिति धातुनामग्रहणं कृतमित्याशयवानाह— धातुनामेति। तयोर्धातुनाम्नोर्भागाः तद्भागाः, तेभ्योऽतिरिक्तभेदे धातुनामभागभेदव्यतिरिक्ते भागभेद इत्यर्थः। उदाहरति— यथेति। 'शोभां पुष्य—' इत्यत्र विरामो न वैरस्यमावहतीति भावः। धातुप्रत्ययमध्यविरामे दोषाभावं निरूप्य प्रातिपदिकप्रत्ययमध्यभेदेऽप्युदाहरति— विमिश्र इति। श्यामा रात्रिः, अररं कवाटम्। 'श्यामान्ते-' इत्यत्र प्रातिपदिकप्रत्ययमध्यविरामो न दुष्यति। विशेषणव्यावर्त्यं कीर्तयति— स्वरसंधीति। उदाहरति— किंचिद्भावालसमिति। अत्र चतुर्थाक्षरावसाने यतिर्विहिता। तथा च अलसमित्यत्र अकारस्य सवर्णदीर्घेणैकादेशेन कबलितत्वात्स्वरसंधिकृतोऽयं नामभागभेद इति न यतिभ्रष्टत्वम्।

**न वृत्तदोषात्पृथग्यतिदोषो वृत्तस्य यत्यात्मकत्वात् ॥ ५ ॥**

वृत्तदोषात् पृथक् यतिदोषो न वक्तव्यः, वृत्तस्य यत्यात्मकत्वात्। यत्यात्मकं हि वृत्तमिति भिन्नवृत्त एव यतिभ्रष्टस्यान्तर्भावान्न पृथग्ग्रहणं कार्यम्।

अत आह—

**न लक्ष्मणः पृथक्त्वात् ॥ ६ ॥**

नायं दोषः। लक्ष्मणो लक्षणस्य पृथक्त्वात्। अन्यद्धि लक्षणं वृत्तस्य, अन्यच्च यतेः— गुरुलघुनियमात्मकं वृत्तम्। विरामात्मिका च यतिरिति।

**विरूपपदसंधि विसंधि ॥ ७ ॥**

पदानां संधिः पदसंधिः। स च स्वरसमवायरूपः प्रत्यासत्तिमात्ररूपो वा। स विरूपो यस्मिन्निति विग्रहः।

---

ननु भिन्नवृत्तयतिभ्रष्टयोरर्थतो भेदाभावात् न पृथक्कथनमर्थवदिति शङ्कामङ्कुरयितुमुपरितनं सूत्रमुपन्यस्यति— न वृत्तेति। गुरुलघुनियमवत् यतिनियमस्यापि वृत्तलक्षणवाक्येनैवावगन्तव्यत्वात् यतिविशिष्टं च वृत्तमिति वृत्तदोषे एव यतिदोषोऽन्तर्भवतीति शङ्कितुरभिप्रायः।

शङ्कामिमां शकलयितुमुत्तरसूत्रमुपादत्ते— **न लक्ष्मणः पृथक्त्वादिति**। यतिवृत्तयोर्लक्षणभेदात् स्वरूपभेदोऽङ्गीकर्तव्यः। तथा च वृत्तदोषे यतिदोषस्यान्तर्भावो दुर्भण इति भावः। लक्षणभेदमेवाह— **गुरुलघ्विति**। स्थानविरामेऽपि गुरुलघुविपर्यासे भवति वृत्तभङ्गः। अस्थानविरामात्मके यतिभङ्गेऽपि यथोक्तगुरुलघुनियमे सति न वृत्तभङ्ग इत्यन्वयव्यतिरेकाभ्यां भिन्नवृत्तयतिभ्रष्टयोर्भिन्नत्वान्न पृथक्कथनमनर्थवदित्यर्थः।

अथ विसंधि वाक्यं विवरीतुमाह— **विरूपपदसंधीति। स चेति।** 'किंचिद्भावालसम्' इत्यत्र स्वरसमवायरूपः। 'ते गच्छन्ति प्रभुपरिबृढम्' इत्यत्र प्रत्यासत्तिरूपः।

**पदसंधेर्वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च ॥ ८ ॥**

विश्लेषः अवग्रहः विभागेन पदानां संस्थितिः । अश्लीलत्वम् असभ्यस्मृतिहेतुत्वम् । कष्टत्वं पारुष्यमिति ।

विश्लेषो यथा—

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः ।' 'लोलालकानुबद्धानि आननानि चकासति ।'

अश्लीलत्वं यथा—

'विरेचकमिदं नृत्तमाचार्याभासयोजितम् ।'

---

विसंधिनस्त्रैविध्य वक्तुमाह— **पदसंधेरिति** । **विश्लेषोऽवग्रह इति** । अत्र पदकालप्रसिद्धोऽवग्रहो न विवक्षितः, किंतु मात्राकालव्यवधानसाम्यादसंहिताप्रगृह्यलक्षण इत्यभिसंधायाह— **विभागेनेति** । स च विश्लेषो द्विविधः— प्रगृह्यनिबन्धनः, संध्यविवक्षानिबन्धनश्च । तत्राद्यमुदाहरति— **कमले इति** । यदवादि दण्डिना, 'न संहितां विवक्षामीत्यसंधानं पदेषु यत् । तद्विसंधीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥' इति । अत्र प्रगृह्यादिहेतुकं विसंधि न भवतीति सकृत्प्रयोगविषयमिदं द्रष्टव्यम्; असकृत्प्रयोगे तु दुष्टमेव । तदुक्तं साहित्यचूडामणौ, "प्रगृह्यादिनिबन्धनत्वे पुनरसकृद्दोषः । यथा— 'धीदोर्बले अतितते उचितार्थवृत्ती' इत्यादि । सकृत्तु न दोषः । तथाच प्रयोगः— 'लीलयैव धनुषी अधिज्यताम्' इति, 'सहसपाते इव लक्ष्यमाणे" इति च । द्वितीयमुदाहरति— **लोलालकेत्यादि** । अत्र 'न संहितां विवक्षामि' इति कामचारप्रयुक्तः सकृदपि दोष एव, 'नित्या संहितैकपदवत्पादेष्वर्धान्तवर्जम्' इति काव्यसमयाध्याये वक्ष्यमाणत्वात् ।

त्रिविधमश्लीलं क्रमेणोदाहरति— **अश्लीलत्वं यथेति** । रेचका नाम नृत्ते पाणिपादादिभ्रमणरूपाश्चत्वारो भरतशास्त्रे प्रसिद्धाः । तदुक्तं संगीतरत्नाकरे, 'रेचकानथ वक्ष्यामश्चतुरो भरतोदितान् । पदयोः करयोः कट्या ग्रीवायाश्च भवन्ति ते ॥' इति । आचार्येण सता नृत्तं सरेचकं योजनीयम्; इदं तु नृत्तं

'चकाशे पनसप्रायैः पुरी षण्डमहाद्रुमैः ।'

'विना शपथदानाभ्यां पदन्यासमुत्सुकम् ।'

कष्टत्वं यथा—

'मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा बभुः ।'

एवं वाक्यदोषानभिधाय वाक्यार्थदोषान् प्रतिपादयितुमाह—

**व्यर्थैकार्थसंदिग्धायुक्तापक्रमलोकविद्या-विरुद्धानि च ॥ ९ ॥**

वाक्यानि दुष्टानीति संबन्धः ॥

क्रमेण व्याख्यातुमाह—

**व्याहतपूर्वोत्तरार्थं व्यर्थम् ॥ १० ॥**

व्याहतौ पूर्वोत्तरावर्थौ यस्मिंस्तत् व्याहतपूर्वोत्तरार्थं वाक्यं व्यर्थम् ।

यथा— 'अद्यापि स्मरति रसालसं मनो मे मुग्धायाः स्मरचतुराणि चेष्टितानि ।'

मुग्धायाः कथं स्मरचतुराणि चेष्टितानि? तानि चेत् कथं मुग्धा

---

विरेचक रेचकविहीनम् । अत एवाचार्याभासयोजितम् यः स्वयमनाचार्यः आचार्यवदवभासते, सोऽयमाचार्याभासः; तेन योजितम् । अत्र विरेचकयाभशेपपुरीषविनाशपदविन्यासैः, विरेचनमिथुनीभावमेहनपुरीषविनाशप्रतीतेस्त्रिविधान्यश्लीलानि द्रष्टव्यानि ।

कष्टत्वमुदाहर्तुमाह— कष्टत्वं यथेति ॥

उक्तवक्तव्यसंगतिपूर्वकमुत्तरसूत्रमवतारयति—एवमिति । चकारेण समुच्चयमाह— वाक्यानि दुष्टानीति संबन्ध इति ।

व्याहतौ परस्परविरुद्धावित्यर्थः । मुग्धायाः कथं स्मरचतुराणि चेष्टितानीति । न कथंचित्संभवन्ति, व्याहतत्वादित्यर्थः । व्याहतिमेव व्याह

अत्र पूर्वोत्तरयोरर्थयोर्विरोधात् व्यर्थमिति।

**उक्तार्थपदमेकार्थम्॥ ११॥**

उक्तार्थानि पदानि यस्मिंस्तत् उक्तार्थपदम् एकार्थम्।

यथा— 'चिन्तामोहमनङ्गमङ्ग! तनुते विप्रेक्षितं सुभ्रुवः।'

अनङ्गः शृङ्गारः। तस्य चिन्तामोहात्मकत्वाच्चिन्तामोहशब्दौ प्रयुक्तावुक्तार्थौ भवतः। एकार्थपदत्वात् वाक्यमेकार्थमित्युक्तम्।

**न विशेषश्चेदेकार्थं दुष्टम्॥ १२॥**

न गतार्थं दुष्टम्, विशेषश्चेत् प्रतिपाद्यः स्यात्।

तं विशेषं प्रतिपादयितुमाह—

**धनुर्ज्याध्वनौ धनुःश्रुतिरारूढेः प्रतिपत्त्यै॥ १३॥**

---

रति 'स्मरचतुराणि' इति।

एकार्थं समर्थयितुमाह— **उक्तार्थपदमिति**। उक्ताः पदान्तरैः प्रतिपादिता अर्थाः येषां तानि उक्तार्थानि। तथाविधानि पदानि यस्मिन् वाक्ये तत् उक्तार्थपदं वाक्यमेकार्थं नाम दुष्टं भवतीति वाक्यार्थः। **चिन्तामोहमिति**। कामिनीकटाक्षपातकलुषितान्तःकरणस्य विरहवेदनामसहमानस्य कस्यचित्कामुकस्येयमुक्तिः। अनङ्गशब्देनात्र विप्रलम्भशृङ्गारो विवक्षितः। तस्य चिन्तामोहाद्युपचितात्मकस्यैव शृङ्गारपदार्थत्वात् तत्कथनेनैव चिन्तामोहयोरवगतत्वाच्चिन्तामोहशब्दौ गतार्थावित्येकार्थौ। नन्वेकार्थलक्षणपरीक्षायामेकार्थत्वं पदस्य प्रतीयते, न तु वाक्यस्य। तत्कथमयं वाक्यदोषः स्यादित्याशङ्क्य छत्रिन्यायेनैकदेशधर्मः समुदाये पर्यवस्यतीत्याशयवानाह— **एकार्थपदत्वादिति**।

क्वचिदपवादं वक्तुमाह— **न विशेषश्चेदेकार्थं दुष्टमिति**। यदि विशेषः प्रतिपाद्यः, तदानीमेकार्थं दुष्टं न भवतीति सूत्रार्थः॥

धनुर्ज्याध्वनावित्यत्र ज्याशब्देनोक्तार्थत्वेऽपि धनुःश्रुतिः प्रयुज्यते, आरूढेः प्रतिपत्त्यै आरोहणस्य प्रतिपत्त्यर्थम् । न हि धनुःश्रुतिमन्तरेण धनुष्यारूढा ज्या धनुर्ज्येति शक्यं प्रतिपत्तुम् ।

यथा— 'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ।' इति ।

**कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादि-निर्देशः संनिधेः ॥ १४ ॥**

कर्णावतंसादिशब्देषु कर्णादीनामवतंसादिपदैरुक्तार्थानामपि निर्देशः संनिधेः प्रतिपत्त्यर्थमिति संबन्धः । न हि कर्णादिशब्दनिर्देशमन्तरेण कर्णादिसंनिहितानामवतंसादीनां शक्या प्रतिपत्तिः कर्तुमिति ।

यथा—

'दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ।'

'लीलाचलच्छ्रवणकुण्डलमापतन्ति ।'

'आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ।'

धनुर्ज्याध्वनाविति । श्रुतिरत्र वाचकः शब्दः । स्पष्टमवशिष्टम् । धनुर्ज्याकिणेति । ज्याशब्दमात्रप्रयोगे ज्याबन्धनेनापि किणसंभवात् भवेदनौचित्यम् । तथा च प्रयोगः, 'ज्याबन्धनिष्पन्दभुजेन यस्य' इति ।

उक्तन्यायमन्यत्रापि संचारयितुमाह— कर्णावतंसेत्यादि । उक्तार्थानामपीति । अवतंसादिभिः कर्णाभरणादीन्येवोच्यन्त इति अवतंसादिप्रयोगे कर्णादीनां गतार्थत्वमित्यभिप्रायः । अन्वयं द्रढयितुं व्यतिरेकमाह— न हीति । 'कर्णावतंसाः कलयन्ति कम्पम्' 'लीलाचलच्छ्रवणकुण्डलमापतन्ति' इत्यत्र लीलाचलनक्रियायोगादारूढप्रतिपत्तिर्भवत्येव । अतः 'अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् । तथैव शोभतेऽत्यन्तमस्याः श्रवणकुण्डलम्' इत्याद्युदाहर्तव्यम् । आययुरिति । स्पष्टार्थम् । धनुर्ज्यादिसूत्र एवैकत्र कर्णावतंसादीनामपि परिगणने कर्तुं शक्येऽपि प्रयोजनभेदं प्रतिपादयितुं सूत्रभेदः कृत इति द्रष्टव्यम् ।

## मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ॥ १५ ॥

मुक्ताहारशब्दे मुक्ताशब्दो हारशब्देनैव गतार्थः प्रयुज्यते शुद्धेः प्रतिपत्त्यर्थमिति संबन्धः । मुक्तानां शुद्धानामन्यरत्नैरमिश्रितानां हारो मुक्ताहारः ।

यथा—'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥'

## पुष्पमालाशब्दे पुष्पपदमुत्कर्षस्य ॥ १६ ॥

पुष्पमालाशब्दे मालाशब्देनैव गतार्थे पुष्पपदं प्रयुज्यते उत्कर्षस्य प्रतिपत्त्यर्थमिति । उत्कृष्टानां पुष्पाणां माला पुष्पमालेति ।

यथा— 'प्रायशः पुष्पमालेव कन्या सा कं न लोभयेत् ।'

ननु मालाशब्दोऽन्यत्रापि दृश्यते; यथा— रत्नमाला,' शब्दमालेति ? स तावदुपचरितस्य प्रयोगः । निरुपपदो हि मालाशब्दः पुष्परचना-

**मुक्ताहारेत्यादि** । सुबोधम् । ननु हसतीव स्तनद्वयमिति हासोत्प्रेक्षण-सामर्थ्यादेव हारस्य रत्नान्तरासवलनलक्षणा शुद्धिः प्रतीयते, न मुक्ताशब्दसंनि-धानात् । अन्यथा हासोत्प्रेक्षैव नोदयमासादयेत् । अतो नेदमुदाहरणमिति चेत्, मैवम्; हारशुद्धिप्रतिपत्त्या हासोत्प्रेक्षा हासोत्प्रेक्षया च हारशुद्धिप्रतिपत्तिरिति परस्पराश्रयप्रसङ्गात् । अतो मुक्ताशब्दसंनिधानादेव हारशुद्धिप्रतिपत्तिरिति भव-त्युदाहरणमिदम् । 'हारो मुक्तावली' इत्यभिधानादत्र हारशब्दो मुख्यया वृत्त्या रत्नान्तरासंवलितमुक्तागुणमभिधत्ते । अतः शुद्धेः प्रतिपत्तिः शब्दत एव सिद्धेति यदि पक्षः, तदा पुष्पमालाशब्दे पुष्पपदवन्मुक्ताहारशब्देऽपि मुक्तापदं कस्यचिदु-त्कर्षस्य प्रतिपत्त्यै प्रयुज्यते । स चोत्कर्षः— त्रासादिदोषशून्यत्वम्, स्थूलवृत्त-त्वम्, स्वच्छतातिशयश्चेति व्याख्येयम् ।

**पुष्पमालेत्यादि** । स्पष्टार्थम् । ननु मालाशब्दस्य रूपहंसमेघादिमालासु प्रयोगदर्शनात् तद्व्यावृत्तिः प्रयोजनं पुष्पपदस्य, न पुनरुक्तिरिति शङ्कते— **नन्विति** । मालाशब्दः पुष्परचनायां मुख्यः, लाक्षणिकः पुनरन्यत्रेति वृत्तिभेदा-न्नायं दोष इति परिहरति— **स तावदिति** ।

विशेषमेवाभिधत्त इति ।

## करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य ॥ १७ ॥

करिकलभशब्दे करिशब्दः कलभेनैव गतार्थः प्रयुज्यते ताद्रूप्यस्य प्रतिपत्त्यर्थमिति । करी प्रौढकुञ्जरः, तद्रूपः कलभः करिकलभ इति ॥

यथा —'त्यज करिकलभ त्वं प्रीतिबन्धं करिण्याः ।'

## विशेषणस्य च ॥ १८ ॥

विशेषणस्य प्रतिपत्त्यर्थमुक्तार्थस्य पदस्य प्रयोगः ।

यथा-- 'जगाद मधुरां वाचं विशदाक्षरशालिनीम् ।'

## तदिदं प्रयुक्तेषु ॥ १९ ॥

तदिदमुक्तं प्रयुक्तेषु, नाप्रयुक्तेषु । न हि भवति- यथा श्रवणकुण्डलमिति, तथा नितम्बकाञ्चीत्यपि । यथा वा करिकलभ इति, तथा उष्ट्रकलभ इत्यपि ।

---

करिकलभेत्यादि । व्यक्तार्थम् ।

विशेषणस्येति । शब्दान्तरस्य सनिधानादुक्तार्थोऽपि विशेष्यशब्द प्रयुज्यते; स न विशेषणस्य प्रतिपत्त्यै भवति । जगादेत्यनेन गतार्थस्य वाक्छब्दस्य माधुर्यवर्णवैशद्यलक्षणप्रतिपत्त्यै प्रयोग इष्यत इति वाक्यार्थ. । 'जगाद मधुरोदारविशदाक्षरमीश्वरः' इति विन्यासकल्पनायां विशेषणस्य प्रयोगः क्रियाविशेषणत्वेऽप्युपपद्यते । अत 'नीलनीरजविकासहारिणा कान्तमीक्षणयुगेन वीक्षते' इत्युदाहार्यम् ।

तदेतत्सार्थकत्वसमर्थनमभियुक्तप्रयुक्तपदनिर्वाहाय, न सर्वत्रेति नियन्तुमाह-- तदिदमिति । प्रयुक्तेषु, अभियुक्तैरिति शेषः । नाप्रयुक्तेष्विति । तथोक्तं काव्यप्रकाशे, 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । संनिधानादिबोधार्थं स्थितेष्वेतत्समर्थनम् ॥' इति । अप्रयुक्तानि दर्शयति-- यथेति ।

## संशयकृत्संदिग्धम् ॥ २० ॥

यद्वाक्यं साधारणानां धर्माणां श्रुतेः, विशिष्टानां चाश्रुतेः संशयं करोति; तत् संशयकृत् सांदिग्धमिति ।

यथा— 'स महात्मा भाग्यवशान्महापदमुपागतः

किं भाग्यवशान्महापदमुपागतः, आहोस्विदभाग्यवशान्महतीमापदमिति संशयकृत् वाक्यं प्रकरणाद्यभावे सतीति ।

## मायादिविकल्पितार्थमयुक्तम् ॥ २१ ॥

मायादिना विकल्पितोऽर्थो यस्मिंस्तन्मायादिविकल्पितार्थमयुक्तम् । अस्तोकमुदाहरणम् ।

## क्रमहीनार्थमपक्रमम् ॥ २२ ॥

इत्थमेकार्थं समर्थ्य, सदिग्धं समर्थयितुमाह—**संशयकृत्संदिग्धमिति** । व्याचष्टे—**यद्वाक्यमिति** । **विशिष्टानामिति** । असाधारणानामित्यर्थः । उक्तलक्षणमुदाहरणे योजयति— **किं भाग्यवशादिति** । लक्षणं विशिनष्टि **प्रकरणादिति** । अत्रादिपदेन संयोगादयो गृह्यन्ते । यथोक्तं हरिणा, 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्ति स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति ।

अयुक्त व्यक्तयितुमाह— **मायादिविकल्पितार्थमयुक्तमिति** । मायादिना कुशलमतिकुण्ठनपटिष्ठकुहनादिना विकल्पितः विरुद्धतया व[illegible] अर्थो यस्मिंस्तद्वाक्यमयुक्त भवति । **अस्तोकमुदाहरणमिति** । विस्तरं हि विदग्धमुखमण्डने, 'प्राहुर्व्यस्तं समस्तं च द्विर्व्यस्त द्विःसमस्तकम् । तथा व्यस्तसमस्तं च द्विर्व्यस्तकसमस्तके ॥' इत्यादिना ।

**क्रमहीनार्थमपक्रममिति** । प्रतियोगिप्रतिपत्तिपूर्वकत्वात् क्रमाभावप्रतिपत्ते·

उद्देशिनाम् अनूद्देशिनां च क्रमः संबन्धः; तेन हीनोऽर्थो यस्मिन्, तत् क्रमहीनार्थमपक्रमम्।

यथा —'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ।'

अत्र कीर्तिश्चन्द्रमसस्तुल्या; प्रतापः सूर्यस्य तुल्यः। सूर्यस्य पूर्वनिपातादक्रमः।

अथवा प्रधानस्यार्थस्य प्रथमनिर्देशः क्रमः; तेन हीनोऽर्थो यस्मिन् तदपक्रमम्।

यथा— 'तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम्।'

## देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ॥ २३ ॥

देशकालस्वभावैर्विरुद्धोऽर्थो येषु, तानि देशकालस्वभावविरुद्धार्थानि वाक्यानि लोकविरुद्धानि। अर्थद्वारेण लोकविरुद्धत्वं वाक्यानाम्।

देशविरुद्धं यथा—

सौवीरेष्वस्ति नगरी मधुरा नाम विश्रुता।
आक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः॥'

कालविरुद्धं यथा— 'कदम्बकुसुमस्मेरं मधौ वनमशोभत।'

---

प्रथमतः क्रममेक प्रथयितुमाह— **उद्देशिनामिति**। तेन हीनः तदभाववान्। उदाहरणमुज्ज्वलार्थम्। अन्यं क्रममभिधत्ते— **अथवेति**। **प्रधानस्य** अभ्यर्हितस्येत्यर्थः। मातङ्गं तुरङ्गं वा प्रयच्छेति वक्तव्ये व्युत्क्रमेणोक्तं वाक्यमस्य कवेरनभिज्ञतामापादयतीति दुष्टम्।

लोकविरुद्धं दर्शयितुमाह- **देशकालस्वभावविरुद्धार्थानीति**। **अर्थद्वारेणेति**। विरुद्धार्थप्रतिपादकत्वाद्वाक्यानि विरुद्धानि व्यपदिश्यन्ते। क्रमेणोदाहरति— **देशविरुद्धमिति**। **सौवीरेष्विति**। आक्षोटाः शैलोत्पन्ना गुडफलवृक्षाः। 'पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे। आक्षोटकन्दरालौ द्वौ' इत्यमरः। यमुनातीरवर्तिन्या मधुराया नगर्याः सौवीरेषु देशेष्वसंभवात् देशविरोधः। **कदम्बेति**। मधुर्वसन्तः। 'चैत्रवसन्तमधुद्रुमदैत्यविशेषेषु पुंसि मधुशब्दः' इति

**स्वभावविरुद्धं यथा— 'मत्तालिमङ्खमुखरासु च मञ्जरीषु सप्तच्छदस्य तरतीव शरन्मुखश्रीः ।'**

**सप्तच्छदस्य स्तबका भवन्ति, न मञ्जर्य इति स्वभावविरुद्धम् ।**

**तथा—**

**'भृङ्गौघैः कलिकाकोशस्तथा भृशमपीड्यत ।**
**यथा गोष्पदपूरं हि ववर्ष बहुलं मधु ॥'**

**कलिकायाः सर्वस्या मकरन्दस्यैतावद्बाहुल्यं स्वभावविरुद्धम् ।**

## कलाचतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि ॥ २४ ॥

नानार्थरत्नमाला । प्रावृषि प्रसवोद्गमशालिनः कदम्बस्य वसन्ते प्रसूनप्रसङ्गासंभवात् कालविरोधः । **मत्तालिमङ्खेति** । मङ्खः स्तुतिपाठकः । 'नान्दीकारश्चाटुकारो मङ्खश्च स्तुतिपाठकः' इति वैजयन्ती । स्तबकाः गुच्छाः । 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । ते नाम स्तबकाः, पुष्पाणि पुञ्जीभूय यत्र वर्तन्ते । मञ्जर्यः वल्लर्यः । 'वल्लरी मञ्जरी स्त्रियाम्' इत्यमरः । यत्र आयामवती प्रसूनपरिपाटी, ता एव मञ्जर्यः । अतः सप्तच्छदस्य स्वभावता गुच्छा एव, न तु मञ्जर्यः संभवन्तीति स्वभावविरुद्धम् । **भृङ्गौघैरिति** । कलिका कोरकः । अनुद्भिन्नमुकुला कलिका कलिकाकोशः । तत्र गोष्पदपूरणपर्याप्तस्य मधुनोऽसंभवात् स्वभावविरुद्धम् । गोष्पदपूरमित्यत्र— गोः पद प्रमाणतया अवच्छेदकमस्य वर्षस्येत्यस्मिन्नर्थे गोष्पदमिति भवति; 'गोष्पदं सेवितासेवितप्रमाणेषु' इति गोष्पदशब्दो निपातितः । गोष्पदं पूरयित्वा ववर्ष गोष्पदपूरं ववर्ष । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति णमुल् । लोकविरुद्धमपि क्वचित्कविसमयप्रसिद्धेः प्राबल्यान्न दुष्टम्; यथा— 'सुसितवसनालंकारायां [illegible] कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥' इति । एवमन्यत्रापि लोकयात्राकविमर्यादयोर्विप्रतिषेधे पूर्वदौर्बल्यमवगन्तव्यम् ।

विद्याविरुद्धानि विवरीतुमाह— **कलाचतुर्वर्गेति** । शास्त्रपदस्योभयत्र

कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरुद्धोऽर्थो येषु, तानि कलाचतुर्वर्गशास्त्रविरुद्धार्थानि वाक्यानि विद्याविरुद्धानि । वाक्यानां विरोधोऽर्थद्वारकः ।

कलाशास्त्रविरुद्धं यथा—

'कालिङ्गं लिखितमिदं वयस्य पत्रं पत्रज्ञैरपतितकोटिकण्टकाग्रम् ।'

कालिङ्गं पतितकोटिकण्टकाग्रमिति पत्रविदामाम्नायः; तद्विरुद्धत्वात् कलाशास्त्रविरुद्धम् । एवं कलान्तरेष्वपि विरोधोऽभ्यूह्यः ।

चतुर्वर्गशास्त्रविरुद्धानि तूदाह्रियन्ते—

'कामोपभोगसाकल्यफलो राज्ञां महीजयः ।'

धर्मफलोऽश्वमेधादियज्ञफलो वा राज्ञां महीजय इत्यागमः; तद्विरोधाद्धर्मशास्त्रविरुद्धमेतद्वाक्यमिति ।

---

संबन्धः । प्रतिपाद्यस्य दुष्टत्वे प्रतिपादकमपि दुष्टं भवतीत्याह— **वाक्यानामिति** । कलाशास्त्रविरुद्धमुदाहरति— **कलाशास्त्रेति** । **कालिङ्गमिति** । कलिङ्गजनेषु दृष्टं पत्रं कालिङ्गमित्युच्यते; तच्च पतितकोटिकण्टकाग्रतया लेखनीयम् । तत्रार्थे तच्छास्त्रफक्किकामाह— **कालिङ्गं पतितकोटिकण्टकाग्रमिति पत्रविदामाम्नाय इति** । विरोधस्तु परिस्फुट एव । **एवमिति** । भरतकलाविरोधो यथा— 'रणद्भिराघट्टनया नभस्वतः' इत्यादावानुलोम्येन प्रातिलोम्येन वा नभस्वत्संचारक्रमेण स्वरा उत्पद्यन्ते, न पुनर्वैचित्र्येणेति कुतो रागसंबन्धिनीनां मूर्च्छनानां स्फुटीभाव इत्यादि द्रष्टव्यम् ।

धर्मार्थकाममोक्षाः चतुर्वर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकः' इत्यमरः । तत्प्रतिपादकशास्त्राणि चतुर्वर्गशास्त्राणि; तद्विरुद्धानि क्रमेणोदाहर्तुं प्रतिजानीते— **चतुर्वर्गेति** । तत्र धर्मशास्त्रविरुद्धमुदाहरति— **कामोपभोगेति** । तत्रागमवाक्यं दर्शयति— **अश्वमेधादीति** । महीजयस्य राज्ञामश्वमेधादिफलत्वेन धर्मशास्त्रेऽभिधानात्, तद्विरुद्धं कामोपभोगसाकल्यफलवाक्यम् । यथा वा— 'सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः । नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥' अत्र ग्रहोपरागं विना

'अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया

द्विषज्जयस्य नयमूलत्वं स्थितं दण्डनीतौ; तद्विरोधादर्थशास्त्रविरुद्धं वाक्यमिति।

'दशनाङ्कपवित्रितोत्तरोष्ठं रतिखेदालसमाननं स्मरामि।'

'उत्तरोष्ठमन्तर्मुखं नयनान्तमिति मुक्त्वा चुम्बननखरदशनस्थानानि' इति कामशास्त्रे स्थितम्; तद्विरोधात् कामशास्त्रविरुद्धार्थं वाक्यमिति।

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदा।'

एतस्यार्थस्य मोक्षशास्त्रे स्थितत्वात् तद्विरुद्धार्थम्।

एते वाक्यवाक्यार्थदोषास्त्यागाय ज्ञातव्याः। ये त्वऽन्ये शब्दा-

रात्रौ स्नानं धर्मशास्त्रविरुद्धम्, 'रात्रौ स्नानं न कुर्वीत राहोरन्यत्र दर्शनात्' इति स्मृतेः। अर्थशास्त्रमत्र दण्डनीतिः। यत्र पुनरर्थकामौ प्रधानम्, लोकयात्रानुवृत्तिमात्राय धर्मः, सा दण्डनीतिः; यस्या भगवान् बृहस्पतिः प्रवक्ता। तद्विरुद्धमुदाहरति— **अहंकारेणेति**। विरोधं विवृणोति— **द्विषज्जयस्येति**। तत् कामशास्त्रम्, यत्र त्रिवर्गस्य परस्परानुपरोधादुपयोगोपदेशः; यस्य भगवान् भार्गवः प्रणेता। कामशास्त्रविरुद्धं दर्शयति— **दशनेति**। विरोधं विवेचयति— **उत्तरोष्ठमिति**। उक्तं हि रतिरहस्ये, 'अङ्गुष्ठे पदगुल्फजानुजघने—' इत्यादि। मोक्षशास्त्रविरुद्धमुदाहरति— **देवताभक्तित इति**। विरोधं व्युत्पादयति— **एतस्येति**। 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते॥' इत्युक्तनीत्या या ज्ञानलक्षणा भक्तिः, सात्र न विवक्षिता। किंत्वार्तत्वादिप्रयुक्ता त्रिरूपा। ज्ञानरूपायास्तु भक्तेर्मोक्षो भवत्येव। तदुक्तं तत्रैव— 'ज्ञानी त्वात्मैव मे मतम्।' इति। अतः 'न तत्त्वज्ञानसंपदा' इत्येतत् 'ज्ञानादेव तु कैवल्यम्' इत्यादिमोक्षशास्त्रविरुद्धम्।

प्रतिपादितानाममीषां दोषाणां परिज्ञानस्य फलमाह— **एत इति**।

र्थदोषाः सूक्ष्माः, ते गुणविवेचने वक्ष्यन्ते ; उपमादोषाश्चोपमाविचार इति ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे

द्वितीयोऽध्यायः ॥

**समाप्तं चेदं दोषदर्शनं द्वितीयमधिकरणम् ॥**

---

**ये त्वन्य इति** । **सूक्ष्माः** काव्यसौन्दर्याक्षेपानतिक्षमाः । 'ओजोविपर्ययात्मा दोषः' इत्यारभ्य तदुदाहरणप्रत्युदाहरणाभ्यां वक्ष्यन्ते; ते गुणविवेचने यथायथमवबोध्याः । यद्येवं तर्हि स्थूलत्वादुपमादोषा दोषविवेचने विविच्यन्तामित्यत आह— **उपमादोषश्चेति** । उपमाविचारे तद्दोषविचारणं प्रतिपत्तिसौकर्याय भवतीति भावः ।

इति कृतरचनायामिन्दुवंशोद्वहेन
त्रिपुरहरधरित्रीमण्डलाखण्डलेन ।
ललितवचसि काव्यालंक्रियाकामधेना-
वधिकरणमयासीत्पूर्तिमेतद्द्वितीयम् ॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति-
व्याख्यायां काव्यालंकारकामधेनौ दोषदर्शनं नाम
द्वितीयमधिकरणम् ॥



# तृतीयमधिकरणम् ॥



यद्विपर्ययात्मानो दोषाः, तान्गुणान्विचारयितुं गुणविवेचनमधिकरणमारभ्यते। तत्रौजःप्रसादादयो गुणाः, यमकोपमादयस्त्वलंकारा इति स्थितिः काव्यविदाम्। तेषां किं भेदनिबन्धनमित्यत्राह—

**काव्यशोभायाः कर्तारो धर्मा गुणाः ॥ १ ॥**

ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति, ते गुणाः; ते चौजःप्रसादादयः, न यमकोपमादयः, कैवल्ये तेषामकाव्यशोभाकरत्वात्।

देव्याः कृतिषु दीव्यन्त्या वाचां वैचित्र्यकारिणीम्।
चेतोहरचमत्कारां प्रस्तौमि गुणविस्तृतिम् ॥ १ ॥

उक्तवक्तव्यसंगतिमुल्लिङ्गयति—यद्विपर्ययात्मानो दोषा इति। निर्वृत्ते दोषनिरूपणे तत्प्रतिभटानां गुणानां निरूपणं लब्धावसरमिति संगतिः। गुणा अलंकारेभ्यो विविच्यन्ते. ते च परस्परं विविच्यन्ते विभज्यन्तेऽस्मिन्निति गुणविवेचनं नामाधिकरणमारभ्यते। 'काव्यशोभाकरान् धर्मानलंकारान्प्रचक्षते। काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ॥' इति दण्डिमतं खण्डयितुं गुणालंकारभेदं दर्शयिष्यन्, पीठिकां प्रतिष्ठापयति—तत्रेति। काव्यविदां कविकर्ममर्मविदाम् ओजःप्रसादादीना गुणा इति यमकोपमादीनामलंकारा इति च विभिन्नव्यवहारविषयत्वं व्यवस्थितमित्यर्थः। प्रश्नपूर्वकमुत्तरसूत्रं प्रसञ्जयति—तेषामिति। तेषां गुणालंकाराणां भेदस्य किं निबन्धनं कारणमिति प्रश्नः। व्याचष्टे—ये खल्विति। गुणा वस्तुतो रीतिनिष्ठा अपि उपचाराच्छब्दधर्मा इत्युक्तम्। एतच्च गुणोद्देशसूत्रे कुशलमुपपादयिष्यामः। गुणशब्दप्रवृत्तिनिमित्तमयोगान्ययोगव्यवच्छेदाभ्यां परिच्छेत्तुं प्रक्रमते—ते चेति। अन्ययोगव्यवच्छेदं तावदाख्याति—कैवल्य इति। तेषामलंकाराणां कैवल्ये गुणसाहचर्याभावे काव्यशोभाकलनाक्षमत्वादित्यर्थः। अयोगं व्यवच्छिनत्ति—ओजः-

ओजःप्रसादादीनां तु केवलानामस्ति काव्यशोभाकरत्वमिति ॥

## तदतिशयहेतवस्त्वलंकाराः ॥ २ ॥

तस्याः काव्यशोभाया अतिशयः तदतिशयः, तस्य हेतवः । तु-शब्दो व्यतिरेके । अलंकाराश्च यमकोपमादयः ।

अत्र श्लोकौ—

'युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥'

## पूर्वे नित्याः ॥ ३ ॥

**प्रसादादीनां त्विति** । **केवलानाम्** अलंकारासहचरितानाम् । अस्त्येवेति संबन्धः ।

अलंकारपदप्रवृत्तिनिमित्तमावेदयितुमाह—**तदतिशयहेतव इति** । जडबुद्धिषु जातानुग्रहो विग्रहमाह— **तस्या इति** । **तुशब्द इति** । व्यतिरेको भेदः । 'तुः स्याद्भेदेऽवधारणे' इत्यमरः ।

अमुमेवार्थमन्वयव्यतिरेकाभ्यामभियुक्तसवादेन द्रढयति— **अत्र श्लोकाविति** । शुद्धाः अलंकारासंकलिता गुणा ओजःप्रसादादयो लावण्यादयश्च यस्य तत् । गुणमात्रविशिष्टमपि काव्यं युवते रूपमिव । स्वदते रोचते रसिकेभ्य इति शेष । निरन्तराभिः निबिडाभिः । अलंकाराः यमकोपमादयः कटकादयश्च, तेषां विकल्पाः विच्छित्तय., तेषां कल्पनाभिः रचनाभिः । विहितप्रणयं रचितानुबन्धं सत् काव्यं युवते रूपमिव अतीवातिमात्रं स्वदते इत्यन्वयमुक्त्वा व्यतिरेकमाह—**यदीति** । वचः काव्यात्मकं गुणेभ्यश्च्युत यदि, तद्वचो यौवनवन्ध्यं लावण्यशून्यम् अङ्गनाया वपुरिव भवति । तदा जनदयितान्यपि लोकप्रियाण्यपि अलंकरणानि नियतमवश्यं दुर्भगत्वं सौन्दर्यवैधुर्यादनादरणीयत्वं संश्रयन्ते इति श्लोकद्वयार्थः ।

**पूर्वे गुणा नित्याः, तैर्विना काव्यशोभानुपपत्तेः ।**

**एवं गुणालंकाराणां भेदं दर्शयित्वा शब्दगुणनिरूपणार्थमाह—**

**ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्यो-
दारतार्थव्यक्तिकान्तयो बन्धगुणाः ॥ ४ ॥**

**बन्धः पदरचना, तस्य गुणाः बन्धगुणाः ओजःप्रभृतयः ।**

'विरुद्धधर्माध्यासो भावं भिन्द्यात्' इति न्यायेन नित्यत्वानित्यत्वाभ्यामपि गुणालंकारभेदः सिद्ध इति दर्शयितुमाह— **पूर्वे नित्या इति** । पूर्वे गुणा नित्या इत्युक्ते अन्ये पुनरलंकारा अनित्या इति गम्यत एव । गुणानां नित्यत्वे हेतुः — **तैर्विनेति** । गुणान्वयव्यतिरेकानुविधायित्वात् काव्यशोभाया इत्यर्थः ।

एवमभेदमतं खण्डितम् । अथोक्तानुवादपूर्वकमुद्देशसूत्रमुदीरयति— **एवमिति** । **शब्दगुणेति** । शब्दनिष्ठा गुणाः शब्दगुणाः । वस्तुतो रीतिधर्मत्वेऽपि गुणानामात्मलाभस्य शब्दार्थाधीनत्वात् तस्य निरूप्यत्वाच्च शब्दार्थधर्मत्वमुपचारादुक्तम् । अथेदानीं मुख्यया वृत्त्या रीतिधर्मत्वमिति आत्मसिद्धान्तमाविष्कुर्वन् सौत्रं पदं व्याकरोति— **बन्धः पदरचना, तस्य गुणा इति** । न तु शब्दार्थयोरिति शेषः । एवं च सति उपक्रमोपसंहारलिङ्गैराचार्यतात्पर्यपर्यालोचनायामात्मभूतरीतिनिष्ठा गुणाः, तच्छरीरभूतशब्दार्थनिष्ठाः पुनरलंकारा इति निश्चीयते । अतो मन्यामहे— गुणत्वादोजःप्रभृतीनामात्मनि समवायवृत्त्या स्थितिः, अलंकारत्वाद्यमकोपमादीनां शरीरे संयोगवृत्त्या स्थितिरिति ग्रन्थकारस्याभिमतम्— इति । न ह्यविपश्चिदपि कश्चिदभिजानीयादभिवदेद्वा— गुणानामात्मनि रीताविव, अलंकाराणां शरीरभूते शब्दार्थयुगले समवायवृत्त्या स्थितिरिति । एवं च गुणालंकाराणामुभयेषामपि समवायवृत्त्या स्थितिरित्यभिमन्यमानैः, 'भेदाभिधानं [1]गण्डुरिकाप्रवाहनयेन' इति यदुक्तम्, तन्निरस्तम् । किंच, 'रीतिरात्मा

1 गड्डलिकेति पाठान्तरम् । 'गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति । इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति । तथा केनाप्यालंकारिकेण गुणालंकारौ

काव्यस्य' इति शब्दार्थयुगलकाव्यशरीरस्य रीतिमात्मानमुपपाद्य, 'विशिष्टा पदरचना रीतिः' इति रीतिं लक्षयित्वा, 'विशेषो गुणात्मा' इति गुणमात्रस्यैवात्मभूतरीतिनिष्ठत्वे प्रतिष्ठापिते यमकोपमादीनामलंकाराणां तच्छरीरभूतशब्दार्थनिष्ठत्वमर्थात्समर्थितं भवति। अत एवौजःप्रसादादीनां गुणत्वं यमकोपमादीनामलंकारत्वमिति च व्यपदेशभेदोऽप्युपपद्यते। एवच सति 'पूर्वे नित्याः' इति सूत्रे गुणानां नित्यत्वम् अलंकाराणाम् अनित्यत्वमासूत्रयता सूत्रकृता गुणानां काव्यव्यवहारप्रयोजकत्वमुक्तं भवति। यथा च परमते व्यङ्ग्यस्य प्राधान्ये ध्वनिरुत्तमं काव्यम्, गुणभावे गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्, संभावनामात्रे चित्रमवरं काव्यमिति काव्यभेदाः कथिताः; तथात्रापि गुणसामग्र्ये वैदर्भी, अविरोधिगुणान्तरानिरोधेन ओजःकान्तिभूयिष्ठत्वे गौडीया, माधुर्यसौकुमार्यप्राचुर्ये पाञ्चालीति काव्यभेदाः कथ्यन्ते। रीतिध्वनिवादमतयोरियांस्तु भेदः— तत्र प्रथमे रीतिरात्मा काव्यस्य; तद्व्यवहारप्रयोजका गुणाः। चरमे तु ध्वनिरात्मा; स एव तद्व्यवहारप्रयोजक इति। उभयत्राप्यात्मनिष्ठा गुणाः। शब्दार्थयुगलं शरीरम्; तन्निष्ठा अलङ्कारा इति च सर्वमविशिष्टम्। ततश्च 'किं समस्तैर्गुणैः काव्यव्यवहारः? उत कतिपयैः? यदि समस्तैस्तत्; कथमसमस्तगुणा गौडीया पाञ्चाली वा रीतिः काव्यस्यात्मा। अथ कतिपयैः; 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः। 'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि। अस्या रदच्छदरसो न्यक्करोतितरां सुधाम्' इत्यादौ गुणनैरपेक्ष्येण विशेषोक्तिव्यतिरेकालङ्कारयोरेव काव्यव्यवहारप्रयोजकत्वं च दृश्यते' इति स्वसंकल्पमात्रकल्पितविकल्पाना नावश्यमवकाशं पश्यामः। अथापि यदि पाण्डित्यकण्डूलवैतण्डिकचण्डिम्ना चिखण्डयिषा परस्य, तर्हि स्वमतं पृष्टः स्वयमेवाचष्टाम्; 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति काव्यसामान्यलक्षणे शब्दार्थयोर्गुणसाहित्यमिष्यते। 'काव्यस्यात्मा रसः' इति चोच्यते। तत्र किं गुणसमष्टिविशिष्टं काव्यम्? तद्व्यष्टिवि-

---

केनचिदभिप्रायेण भिन्नतयोक्तौ। इतरे तु हेतुविचार विनैव तदनुसारेण तद्भेद वदन्तीति' तस्याभिप्रायः। 'गङ्गरिका अज्ञातप्रवाहागमस्थानो धारावाहिकाप्रवृत्ता नदीविशेष इति केचित्। मेषयूथैरनुगम्यमाना मेषीत्यन्ये। तन्न्यायेन भ्रान्तपरम्परयैव भेदो व्यवह्रियते' इति तु चक्रवर्तिप्रभृतय।

तान् क्रमेण दर्शयितुमाह—

**गाढबन्धत्वमोजः ॥ ५ ॥**

बन्धस्य गाढत्वं यत्, तत् ओजः ।

यथा—'विलुलितमकरन्दा मञ्जरीर्नर्तयन्ति' । न पुनः 'विलुलितमधुधारा मञ्जरीर्लोलयन्ति ।'

**शैथिल्यं प्रसादः ॥ ६ ॥**

बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः ।

नन्वयमोजोविपर्ययात्मा दोषः, तत् कथं गुण इत्यत आह—

**गुणः संप्लवात् ॥ ७ ॥**

शिष्टं वा? नाद्यो निरवद्यः, एकैकगुणोदाहरणेषु काव्यत्वाभावप्रसङ्गात् गुणसमष्टिवैशिष्ट्याभावात् । न द्वितीयः, वस्त्वलंकारध्वनिषु गुणिनो रसस्याभावेन गुणस्यैवाभावात् । किंच, किं सर्वे रसाः संभूय काव्यात्मीभवन्ति? उत एको रसः? आद्ये न कुत्रापि काव्यात्मसंभावना, विरोधिरसानामैकाधिकरण्यासंभवात्। द्वितीये वस्त्वलंकारध्वनिषु रसासंभवात् आत्मविधुरेषु काव्यव्यवहाराभावप्रसङ्ग इत्यलं परमतदोषोद्धाटनपाटवप्रकटनेन । प्रकृतमनुसरामः ।

उद्देशक्रमादमीषां गुणानामसाधारणधर्मानाख्यातुमारभते—**तान् क्रमेणेति** । बन्धस्य पदरचनायाः गाढत्वं कनकशलाकावयवघटनवन्निबिडत्वम् । तत्र हेतवः— संयुक्ताक्षरत्वम्, निरन्तररेफशिरस्कैर्वर्गाणां प्रथमद्वितीयैस्तृतीयचतुर्थैः प्रथमैस्तृतीयैश्च संयोगाः, विसर्जनीयजिह्वामूलीयोपध्मानीयाः, गुर्वन्तता, समासाश्च, इत्येवमादयस्तरतमभावेनावस्थिताः । तत्रोदाहरणप्रत्यु[illegible] दर्शयति—**यथेति** । उभयत्र गाढत्वशैथिल्ये स्फुटे ।

**शैथिल्यमिति** । अस्य वृत्तिः स्पष्टार्था ।

शिथिलत्वमोजोगुणविपर्ययरूपम् । तदात्मकत्वे प्रसादस्य दोषत्वमेव स्यादिति परशङ्कां प्रस्तुत्य तां पराकर्तुमनन्तरसूत्रमवतारयति— **नन्विति** । संप्लवो

गुणः प्रसादः, ओजसा सह संप्लवात् । शुद्धस्तु दोष एवेति ।

ननु विरुद्धयोरोजःप्रसादयोः कथं संप्लव इत्यत्राह—

**स त्वनुभवसिद्धः ॥ ८ ॥**

स तु संप्लवस्तु अनुभवसिद्धः तद्विदां रत्नादिविशेषवत् ।

अत्र श्लोकः—

'करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥'

**साम्योत्कर्षौ च ॥ ९ ॥**

साम्यमुत्कर्षश्चौजःप्रसादयोरनुभवादेव ।

साम्यं यथा— 'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।'

---

मेलनम् । प्रसादो गुणो भवत्येव, ओजसा गुणेन सह संप्लवात् । तदमिश्रं तु शैथिल्यं दोष एवेत्याह— **शुद्धस्त्विति** ।

ननु गाढत्वशैथिल्ययोस्तमःप्रकाशवद्विरुद्धस्वभावयोः संप्लव एव न संभवतीति शङ्कामनूद्यानन्तरसूत्रेणापवदितुमाह—**नन्विति** । व्याचष्टे—**स तु संप्लव इति** । रत्नविशेषवत्परीक्षानुभवसाक्षिक इत्यर्थः ।

विरुद्धयोरपि क्वचित्संप्लवः संभवतीत्यभियुक्तोक्तिमभिदर्शयति— **करुणेति** । यानि करुणानि कारुण्यावहानि यानि मनोज्ञानि च वस्तूनि, तेषु युगपदनुभूयमानेषु समसमयसमुत्पन्नयोः सुखदुःखयोः संप्लवो यथा अनुभवतः स्वसंवेदनात् सिद्धः, तथा ओजःप्रसादयोरपि संप्लवः स्वसंवित्संवेद्यतया सिद्ध इति श्लोकार्थः ।

अत्र ओजःप्रसादयोः साम्ये पर्यायतः प्रकर्षे च प्रसादस्त्रिप्रकारो भवति । ते च प्रकारा अप्यनुभवगम्या इति दर्शयितुमाह— **साम्योत्कर्षौ चेति** । क्रमेण त्रिविधं प्रसादमुदाहृत्य दर्शयति— **साम्यं यथेति** । 'विषयव्यावृत्ता-

क्वचिदोजः प्रसादादुत्कृष्टम् । यथा— 'व्रजति गगनं भल्लातक्याः फलेन सहोपमाम् ।'

क्वचिदोजसः प्रसादस्योत्कर्षः । यथा— 'कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।'

## मसृणत्वं श्लेषः ॥ १० ॥

मसृणत्वं नाम तत्, यस्मिन् सति बहून्यपि पदान्येकवद्भासन्ते ।

यथा— 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।'

न पुनः 'सूत्रं ब्राह्ममुरःस्थले ।' 'भ्रमरीवल्गुगीतयः ।' 'तटित्कलिलमाकाशम्' इति । एवं तु श्लेषो भवति 'ब्राह्मं सूत्रमुरःस्थले ।' 'भ्रमरीमञ्जुगीतयः ।' 'तटिज्जटिलमाकाशम् ।' इति ।

## मार्गाभेदः समता ॥ ११ ॥

---

त्मा—' इत्यादावोजः, 'यथाविधि सूनवे' इत्यादौ प्रसादः । भिन्नदेशयोरप्योजःप्रसादयोः परस्परच्छायानुकारितया संप्लवः । उभयोरत्र साम्यं वेदितव्यम् । ओजसः प्रसादादुत्कर्षमुदाहरति—व्रजतीति । भल्लातकी नाम वीरवृक्षः । 'वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु' इत्यमरः । 'कुसुमशयनम्' इत्यत्र प्रसादस्योत्कर्षो द्रष्टव्यः ।

श्लेषं विशदयितुमाह— **मसृणत्वं श्लेष इति** । मसृणत्वं विशिष्य दर्शयति—**यस्मिन्निति** । यत्र हि व्यासेऽपि समासवदवभासः स श्लेषः । 'अस्त्युत्तरस्याम्' इति सामान्येनोदाहरणमुक्त्वा श्लेषस्य व्यतिरेकमुखेनान्वयमाविष्करोति— **न पुनरिति** । 'सूत्रं ब्राह्ममुरःस्थले,' 'भ्रमरीव [illegible]गीतयः,' तटित्कलिलमाकाशम्' इत्यत्र श्लेषः पुनर्नास्तीति संबन्धः । 'सूत्रं ब्राह्म'मित्यत्र परसवर्णेऽपि परुषाक्षरोत्थानान्न श्लेषः । तर्हि कीदृशि विन्यासे श्लेषो भवतीत्यत आह— **एवं त्विति** । अस्य गुणस्य विपर्ययो विसन्धिर्वाक्यदोषस्य विश्लेषात्मा भेदः ।

समतां समाख्यातुमाह— **मार्गाभेद इति** । आदिमध्यावसानेष्वैकरूप्यं

मार्गस्य अभेदः मार्गाभेदः समता। येन मार्गेणोपक्रमः, तस्य अत्याग इत्यर्थः, श्लोके प्रबन्धे चेति। पूर्वोक्तमुदाहरणम्।

विपर्ययस्तु यथा—

'प्रसीद चण्डि! त्यज मन्युमञ्जसा
जनस्तवायं पुरतः कृताञ्जलिः।
किमर्थमुत्कम्पितपीवरस्तन-
द्वयं त्वया लुप्तविलासमास्यते॥'

## आरोहावरोहक्रमः समाधिः॥ १२॥

आरोहावरोहयोः क्रम आरोहावरोहक्रमः समाधिः परिहारः। आरोहस्यावरोहे सति परिहारः, अवरोहस्य वा आरोहे सतीति।

तत्रारोहपूर्वकोऽवरोहो यथा—

'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे।'

अवरोहपूर्वकस्त्वारोहो यथा—'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः।'

समतेत्यर्थः। तस्या विषयं दर्शयति— **श्लोके प्रबन्धे चेति**। किमत्रोदाहरणमिति चेदाह— **पूर्वोक्तमिति**। अस्त्युत्तरस्यामित्यादि। प्रत्युदाहरणमाह— **विपर्ययस्त्विति**। प्रसीद त्यजेति कर्तृवाचितया प्रक्रान्तस्य मार्गस्य आस्यत इत्यत्र त्यागान्न समता।

पञ्चमं गुणं प्रपञ्चयितुमाह— **आरोहावरोहक्रम इति**। अत्र स्वाभिमतं तावदेकमर्थं लक्षणवाक्यस्य समर्थयते— **समाधिः परिहार इति**। अवरोहे प्रवर्तमाने सत्यारोहस्य प्रवृत्तस्य परिहारः परित्यागः; आरोहे च सत्यवरोहस्य परिहारः; आरोहावरोहयोर्विरुद्धत्वेन यौगपद्यासंभवादिति भावः। दीर्घादिगुर्वक्षरप्राचुर्ये आरोहः। लघ्वादिशिथिलप्रायत्वे चावरोह इति द्रष्टव्यम्। तथा च आरोहपूर्वकोऽवरोहः, क्वचिदवरोहपूर्वक आरोह इति समाधेर्द्वैविध्यमुक्तं भवति। तत्राद्यमुदाहरति—**आरोहपूर्वक इति**। 'निरानन्दः कौन्दे' इत्यत्र गुर्वक्षरबाहुल्यादारोहः। मधुनीत्यत्र लघ्वक्षरप्राचुर्यादवरोहः। द्वितीयमुदाहरति—**अवरोहपूर्वक**

आरोहस्य क्रमः अवरोहस्य च क्रमः, आरोहावरोहक्रमः; क्रमेणारोहणमवरोहणं चेति केचित् ।

यथा— 'निवेशः स्वःसिन्धोस्तुहिनगिरिवीथीषु जयति ।'

**न पृथगारोहावरोहयोरोजःप्रसाद-**
**रूपत्वात् ॥ १३ ॥**

न पृथक् समाधिर्गुणः, आरोहावरोहयोरोजःप्रसादरूपत्वात् । ओजोरूपश्चारोहः, प्रसादरूपश्चावरोह इति ।

**नासंपृक्तत्वात् ॥ १४ ॥**

यदुक्तमोजःप्रसादरूपत्वमारोहावरोहयोः, तन्न; असंपृक्तत्वात् । संपृक्तौ खल्वोजःप्रसादौ नदीवेणिकावद्वहतः ।

**अनैकान्त्याच्च ॥ १५ ॥**

न चायमेकान्तः नियमः; यदोजस्यारोहः; प्रसादे चावरोह इति ।

इति । नरा इत्यत्र शैथिल्यादवरोहः । शीलभ्रष्टा इत्यत्र गुर्वक्षरप्रचुरत्वादारोहः । अस्यैव लक्षणवाक्यस्यान्यैरभिहितमर्थमभ्यनुजिज्ञासुरनुवदति—**आरोहस्य क्रम** इति । निःश्रेणिकारोहावरोहन्यायेन क्रमेणारोहणम्, क्रमेण चावरोहणमिति लक्षणवाक्यार्थः । उदाहरति—**निवेश** इति । 'निवेशः स्वःसिन्धोः' इत्यत्र निःश्रेणिकाक्रमेणारोहः । 'तुहिनगिरि—' इत्यत्रावरोहः ।

ननु लक्षणवाक्यार्थपर्यालोचनया समाधेरोजःप्रसादानतिरेकान्न पृथक्त्वमिति शङ्कामङ्कुरयितुमुत्तरसूत्रमुपक्षिपति— **न पृथगिति** । व्याचष्टे— '**न पृथक् समाधिरिति** ।

आरोहावरोहावोजःप्रसादरूपौ न भवतः, असंपृक्तत्वात् अतः परस्परच्छायानुकारितया संपृक्तयोरोजःप्रसादयोर्न समाधिरन्तर्भवतीत्यभिसंधाय सिद्धान्तसूत्रं व्याचष्टे—**यदुक्तमिति** । संपृक्तत्वं सदृष्टान्तमुपपादयति—**संपृक्तौ खल्विति** । संपृक्तसरिद्द्वयसलिलन्यायेन संपृक्तावोजःप्रसादाविति तद्विलक्षणयोरारोहावरोहयोः संपृक्तत्वव्यतिरेकादसंपृक्तत्वहेतोरसिद्धिरुद्धृता ।

**ओजःप्रसादयोस्तीव्रावस्था ताविति चेदभ्युपगमः ॥ १६ ॥**

ओजःप्रसादयोः क्वचित्तीव्रावस्था। सा च आरोहावरोहाख्येत्येवं चेन्मन्यसे; अभ्युपगमः न विप्रतिपत्तिः।

**विशेषापेक्षित्वात्तयोः ॥ १७ ॥**

स विशेषो गुणान्तरमेव।

ननु न केवलं नदीद्वयवेणिकान्यायेनौजःप्रसादयोः साम्येनावस्थितिः, किंतु 'साम्योत्कर्षौ च' इत्युक्तत्वात्समुद्गकस्थमणिप्रभासमूहन्यायादुच्चावचभावेन स्थितिः। तस्मिन् पक्षे कथमयं समाधिः पृथग्गुण इति शङ्कामपनेतुमाह—**अनैकान्त्याच्चेति**। ओजःप्रसादयोरारोहावरोहसाहचर्यनियमो न संभवति, व्यभिचारात्। व्यभिचारस्तु, 'उद्गच्छदच्छसुभगच्छविगुच्छकच्छम्' इत्यादौ, 'यतो यतो निवर्तते ततस्ततो विमुच्यते' इत्यादौ च आरोहशून्यस्यौजसः, अवरोहशून्यस्य प्रसादस्य च स्थितत्वादित्यभिप्रायः।

न्वारोहावरोहावोजःप्रसादयोरवस्थाविशेषौ स्याताम्; अतो न पृथक् समाधिरिति यदि चोद्येत, तर्हि समाधेर्दत्तो हस्तावलम्ब इति दर्शयितुमनन्तरसूत्रमवतारयति— **ओजःप्रसादयोस्तीव्रावस्था ताविति**। शङ्कांशं संकलय्य दर्शयति— **ओजःप्रसादयोः क्वचिदिति**। **सा चेति**। सा च तीव्रावस्था। **आरोहावरोहाख्येति**। कारणे कार्यत्वमुपचर्योक्तम्; यद्वक्ष्यति— 'विशेषापेक्षित्वात्' इति, 'आरोहावरोहनिमित्तम्' इति च। अनुपचारे तु 'विशेषरूपत्वात्' इति, 'आरोहावरोहौ' इति च ब्रूयात्। ओजःप्रसादयोस्तीव्रावस्था आरोहावरोहयोः कारणमित्यर्थः। अनिष्टमापादयन् भवानभीष्टमेवाचष्टे इत्याह—**अभ्युपगम इति**।

परोक्तस्याभ्युपगमे पर्यवसितमर्थं समर्थयितुमाह— **विशेषेति**। विशेषः तीव्रावस्थात्मा, तमपेक्षितुं शीलमनयोरिति विशेषापेक्षिणौ तयोर्भावस्तत्त्वं तस्मात्। आरोहावरोहाभ्यामोजःप्रसादयोस्तीव्रावस्था हि स्वनिमित्तत्वेनापेक्षिता। सोऽयमोजःप्रसादव्यतिरेकेण समाधिरन्यो गुण इति सूत्रार्थः।

**आरोहावरोहनिमित्तं समाधिराख्यायते ॥ १८ ॥**

आरोहावरोहक्रमः समाधिरिति गौण्या वृत्त्या व्याख्येयम् ।

**क्रमविधानार्थं वा ॥ १९ ॥**

पृथक्करणमिति । पाठधर्मश्च न संभवतीति 'न पाठधर्माः सर्वत्रादृष्टेः' इत्येवं वक्ष्यामः ।

**पृथक्पदत्वं माधुर्यम् ॥ २० ॥**

बन्धस्य पृथक्पदत्वं यत्, तत् माधुर्यम् । पृथक् पदानि यस्य स पृथक्पदः, तस्य भावः पृथक्पदत्वम् । समासदैर्घ्यनिवृत्तिपरं चैतत् । पूर्वोक्तमुदाहरणम् ।

विपर्ययस्तु यथा— 'चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः ।'

---

नन्वमुमर्थमभिधातुं समाधिलक्षणवाक्यं न क्षमत इत्याशङ्क्य गौणवृत्तिराश्रयणीयेत्याह—**आरोहावरोहेति** । क्रमपदेन तन्निमित्तं लक्ष्यत इत्यर्थः ।

ननु अवस्था पुनरवस्थावतो यदा न भिद्यते, तदा तीव्रावस्था ओजःप्रसादात्मिकैव भवति । यद्यपि यद्यत् ओजः, तत्तत् आरोह इति नास्ति नियमः; तथापि यो य आरोहः, तत्तत् ओज इति भवति । ततः सत्यं न समाधिना प्रसादः स्वीक्रियते, प्रसादेन च समाधिः संगृह्यत एवेति किमर्थमस्योपादानमित्यत आह— **क्रमविधानार्थं वेति** । नात्र क्रमः परस्परम्; अपि तु क्रमेणारोहणं क्रमेणावरोहणमित्येवरूपः क्रमो ज्ञेयः । नन्वारोहावरोहक्रमः पाठधर्मः किं न स्यादिति चोद्यं वक्ष्यमाणयुक्त्या विघटितमित्याह— **पाठ [illegible]ेति** ।

माधुर्यमवधारयितुमाह— **पृथक्पदत्वमिति** । सूत्रार्थं विविङ्क्ते— **बन्धस्येति** । अव्याप्तिं परिहरति— **समासदैर्घ्यनिवृत्तिपरमिति** । **पूर्वोक्तमिति** । **'अस्त्युत्तरस्याम्'** इत्याद्युदाहरणम् । प्रत्युदाहरणमाह— **विपर्ययस्त्विति** । समासपददैर्घ्यात् विपर्ययः । दत्तं धृतम् ।

## अजरठत्वं सौकुमार्यम् ॥ २१ ॥

बन्धस्य अजरठत्वम् अपारुष्यं यत्, तत् सौकुमार्यम् । पूर्वोक्तमुदाहरणम् ।

विपर्ययस्तु यथा— 'निदानं निर्द्वैतं प्रियजनसदृक्त्वव्यवसितिः सुधासेकप्लोषौ फलमपि विरुद्धं मम हृदि ।'

## विकटत्वमुदारता ॥ २२ ॥

बन्धस्य विकटत्वं यत्, असौ उदारता । यस्मिन् सति नृत्यन्तीव पदानीति जनस्य वर्णभावना भवति, तत् विकटत्वम्, लीलायमानत्वमित्यर्थः ।

यथा— 'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत्तत्र चित्रं कलं च ।'

न पुनः— 'चरणकमललग्नैर्नूपुरैर्नर्तकीनां झटिति रणितमासीन्मञ्जु चित्रं च तत्र ।'

## अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ॥ २३ ॥

यत्र झटित्यर्थप्रतिपत्तिहेतुत्वम्, स गुणः अर्थव्यक्तिरिति । पूर्वोक्तमुदाहरणम् । प्रत्युदाहरणं तु भूयः सुलभं च ।

---

सौकुमार्यं पर्यालोचयितुमाह— **अजरठत्वं सौकुमार्यमिति** । बन्धस्य अजरठत्वं कोमलत्वम्, श्रुतिसुखत्वमिति यावत् । **पूर्वोक्तमिति** । 'अस्त्युत्तरस्याम्' इत्याद्युदाहरणम् । प्रत्युदाहरणमाह— **विपर्ययस्त्विति** । सौकुमार्यस्य विपर्ययः कष्टत्वभिन्नवृत्तत्वे । निर्द्वैत संशयाभावः । अत्र निर्द्वैतमिति कष्टम् ।

उदारतामुदीरयितुमाह— **विकटत्वमिति** । क्रमशो वर्धमानाक्षरपदत्वम्, पदप्रथमाद्यक्षराणां पदान्तरप्रथमाद्यक्षरैः सादृश्यं च । उदाहरणप्रत्युदाहरणे दर्शयति— **यथेति** ।

अर्थव्यक्तिं समर्थयितुमाह— **अर्थव्यक्तीति** । वृत्तिः स्पष्टार्था । **पूर्वोक्तम्** 'अस्त्युत्तरस्याम्' इति । **सुलभं चेति** । 'सपदि पङ्क्तिविहङ्गमनाम' इत्यादि ।

## औज्ज्वल्यं कान्तिः ॥ २५ ॥

बन्धस्योज्ज्वलत्वं नाम यत्, असौ कान्तिरिति; तदभावे पुराणच्छायेत्युच्यते ।

यथा— 'कुरङ्गीनेत्रालीस्तबकितवनालीपरिसरः ।'

विपर्ययस्तु भूयान् सुलभश्च ।

श्लोकाश्चात्र भवन्ति—

पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥

श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ।
अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥

यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥

प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥

अव्यवहितान्वयप्रसिद्धार्थपदत्वे हि भवत्यर्थव्यक्तिः । अस्य च विपर्ययः—असाध्वप्रतीतानर्थकान्यार्थनेयार्थगूढार्थयतिभ्रष्टक्लिष्टसंदिग्धायुक्तानि । असाधुत्वे हि भवति नार्थव्यक्तिः । यत्र च भवति, तत्र 'असाधुरनुमानेन वाचकः कैश्चिदिष्यते' इत्युक्तत्वादसाधुशब्द साधुशब्दानुमानद्वारेणार्थबोधक इति नार्थव्यक्तिः । पूरणार्थमव्ययं च कस्मादस्य प्रयोग इति संदेहावहत्वादर्थव्यक्तिं व्यवदधाति । यतिभ्रंशे च अर्थव्यक्तिहतिः । एवमन्यत्रापि द्रष्टव्यम् ॥

कान्तिं कथयितुमाह— **औज्ज्वल्यमिति** पत्रमिति वक्तव्ये किसलयमित्यादि, जलधाविति वक्तव्ये अधिजलधीति, राज्ञीति वक्तव्ये राजनीति, कमलमिवेति वक्तव्ये कमलायत इत्यादिः कान्तिहेतुः । विपर्ययस्य विषयं दर्शयति— **तदभाव इति** । अत्र संवादं संदर्शयन्, अमून् गुणान् अन्यश्लोकैरुपश्लोकयति— **पदन्यासस्येत्यादि** । श्लोकाः स्पष्टार्थाः ।

आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥

बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेन हि पदन्यासाः कामं धारामधुश्च्युतः ॥

बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ।
एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ॥

विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः ॥

पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्तिः स्मृतो गुणः ॥

औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः ।
पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः ॥

यथा विच्छिद्यते रेखा चतुरं चित्रपण्डितैः ।
तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥

**नासन्तः संवेद्यत्वात् ॥ २६ ॥**

न खल्वेते गुणा असन्तः, संवेद्यत्वात्तद्विदाम् ।

संवेद्यत्वेऽपि भ्रान्ताः स्युरित्यत आह—

**न भ्रान्ता निष्कम्पत्वात् ॥ २७ ॥**

नन्वेते गुणाः स्वसंकल्पनामात्रसाराः, रूपरसादिवदपरोक्षतया अधिगन्तुमशक्यत्वादिति शङ्कामुट्टङ्कयितुमाह— नासन्त इति । अयमर्थः— ओजःप्रमुखा एते गुणाः, असन्तः तुच्छा न भवन्ति । कुतः? संवेद्यत्वात् । सहृदयसंवेदनस्य विषयत्वात् ।

असर्वजनीनत्वादियं प्रतीतिर्भ्रान्तिरेव किं न स्यादिति शङ्कामङ्कुरयित्वा समुन्मूलयितुमाह— न भ्रान्ता इति । निष्कम्पत्वात् असर्वजनीनत्वेऽप्यबाधितत्वादित्यर्थः ॥

न गुणा भ्रान्ताः, एतद्विषयायाः प्रवृत्तेर्निष्कम्पत्वात् ।

**न पाठधर्माः सर्वत्रादृष्टेः ॥ २८ ॥**

नैते गुणाः पाठधर्माः, सर्वत्र अदृष्टेः । यदि पाठधर्माः स्युः, तर्हि विशेषानपेक्षाः सन्तः सर्वत्र दृश्येरन् । न च सर्वत्र दृश्यन्ते । विशेषापेक्षया विशेषाणां गुणत्वाद्गुणाभ्युपगम एवेति ।

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने

तृतीयेऽधिकरणे प्रथमोऽध्यायः ॥

ओजःप्रमुखा गुणाः पाठधर्मा इति प्रत्यवस्थातारं प्रत्याह-- **न पाठधर्मा इति** । व्याचष्टे-- **नैते गुणा इति** । **सर्वत्र** उदाहरणे प्रत्युदाहरणे च । पाठधर्मत्वे बाधकमाह-- **यदि पाठधर्माः स्युरिति** । सहृदयसंविदालम्बनतया विशेषाः केचिदपेक्षणीयाः त एव विशेषा गुणा इत्यभ्युपगन्तव्या इति ।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्तिव्याख्यायां काव्यालंकारकामधेनौ गुणविवेचनं नाम

तृतीयेऽधिकरणे प्रथमोऽध्यायः ॥



# द्वितीयोऽध्यायः ॥

शब्दगुणविवेके कृते संप्रत्यर्थगुणविवेचनार्थमाह—

**त एवार्थगुणाः ॥ १ ॥**

त एव ओजःप्रभृतयः अर्थगुणाः ।

वाच्यवाचकद्वारेण शब्दार्थगुणानां भेदं दर्शयति—

**अर्थस्य प्रौढिरोजः ॥ २ ॥**

अर्थस्याभिधेयस्य प्रौढिः प्रौढत्वं यत् तत् ओजः ।

पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्यासमासौ च साभिप्रायत्वमस्य च ॥

पदार्थे वाक्यवचनं यथा— 'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।'

कारुण्यसंपदुत्कूललावण्यगुणशालिनीम् ।
स्वच्छस्वच्छन्दवाचालां भावये हृदि भारतीम् ॥ १ ॥

शब्दगुणविवेचने कृते लब्धावसरमर्थगुणविवेचनमिति संगतिमुल्लिङ्ग्य-न्ननन्तरसूत्रमवतारयति— **शब्दगुणविवेक** इति ।

शब्दगुणा एव चेदर्थगुणाः, किमनेन विधान्तरविधानव्यसनेन, लक्षितत्वात्तेषामित्याशङ्क्य, शब्दार्थगुणानां नामतो भेदाभावेऽपि शब्दार्थोपश्लेष-वशादस्ति भेद इत्याह—

**वाच्येति** । प्रागुद्देशपरिपाट्या प्रथमप्राप्तमोजः प्रतिपादयितुमाह— **अर्थस्येति** । वृत्तिः स्पष्टार्था ।

प्रौढिं पद्येन पञ्चधा प्रपञ्चयति— **पदार्थ** इति । तत्राद्यमुदाहरति—

अत्र चन्द्रपदवाच्येऽर्थे 'नयनसमुत्थं ज्योतिरत्रेः' इति वाक्यं प्रयुक्तम् । पदसमूहश्च वाक्यमभिप्रेतम् ।

अनया दिशा अन्यदपि द्रष्टव्यम् । तद्यथा—

'पुरः पाण्डुच्छायं तदनु कपिलिम्ना कृतपदं
ततः पाकोत्सेधादरुणगुणसंसर्गितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं बदरमरसत्वं कलयति ॥'

न चैवमतिप्रसङ्गः, काव्यशोभाकरत्वस्य गुणसामान्यलक्षणस्याव-स्थितत्वात् ।

वाक्यार्थे पदाभिधानं यथा—'दिव्येयं न भवति, किंतु मानुषी' इति वक्तव्ये 'निमिषति' इत्याहेति ।

---

**पदार्थ इति** । लक्ष्यलक्षणयोरानुकूल्यमुन्मीलयति— **चन्द्रपदेति** । 'तिङ्सुबन्त-चयो वाक्यं क्रिया वा कारकान्विता' इत्युक्तलक्षणं वाक्यं न विवक्षितम्, किंतु पदसमुदायमात्रमभिमतमित्याह— **पदसमूहश्चेति** ।

अयं न्यायोऽन्यत्रापि सचारणीय इत्याह— **अनयेति** । अन्यदपि दर्शयति—**पुरः पाण्डुच्छायमिति** । स्थपुटो निम्नोन्नतः । विष्कम्भ आभोगः। अत्र कपिलमिति वक्तव्ये 'कपिलिम्ना कृतपदम्' इति, शुष्कमिति वक्तव्ये 'शनैः शोषारम्भे' इत्यादि च वाक्यं प्रयुक्तमिति पदार्थे वाक्यरचना । 'दक्षात्मजाद-यितवल्लभवेदिकासु' इत्यादावतिप्रसङ्गं परिहरति— **न चैवमिति** । तत्र हेतुः— **काव्यशोभाकरत्वस्येति** । तत्र गुणसामान्यलक्षणाभावान्नातिप्रसङ्ग इत्यर्थः ।

द्वितीयां प्रौढिं द्रढयति— **वाक्यार्थ इति** । किमि[illegible]गुत मानुषीति पृष्टः कश्चिदुत्तरमाह—निमिषतीति । अनेन मानुषधर्म[illegible]चिना पदेन— देवीयं न भवति, किं तर्हि, मानुषी— इति वाक्यार्थः प्रतिपादितो भवति ।

पदार्थे वाक्यम्, वाक्यार्थे पदमिति प्रौढेर्भेदाभ्यां व्याससमासौ पुनरुक्तौ स्यातामिति न शङ्कनीयम् । तत्र हि पदार्थो वाक्यार्थताम्, वाक्यार्थश्च पदार्थतां

**अस्य वाक्यार्थस्य व्यासससमासौ ।**

**व्यासो यथा—**

**'अयं नानाकारो भवति सुखदुःखव्यतिकरः**
**सुखं वा दुःखं वा न भवति भवत्येव च ततः ।**
**पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि त-**
**त्पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम् ॥'**

**समासो यथा-**

**'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।**
**सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'**

**साभिप्रायत्वं यथा—**

**'सोऽयं संप्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा**
**जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ।'**

**आश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्योपक्षेपपरत्वात्साभिप्रायत्वम् । एतेन 'रतिविगलितबन्धे केशपाशे सुकेश्याः' इत्यत्र सुकेश्या इत्यस्य च साभिप्रायत्वं व्याख्यातम् ।**

---

प्रतिपद्यते । इह तु वाक्यार्थस्यैव व्यासो विस्तरः, समासश्च संक्षेपो वाक्येनैवेति भेदादित्याह— **अस्य वाक्यार्थस्येति** । व्यासमुदाहरति— **अयं नानाकार** इति । अयम् अविसंवादितया अनुभूयमानः सुखदुःखव्यतिकरः, नानाकारो विचित्ररूपो भवतीति वाक्यार्थः । अस्यैव विस्तरः 'सुखं वा दुःखं वा' इत्यादिना कृत इति व्यासः । समासं समुन्मेषयति— **ते हिमालयमिति** । अत्र संक्षेपः स्फुटः ।

पञ्चमीं प्रौढिं प्रपञ्चयति— **साभिप्रायत्वमिति** । पदान्तरप्रयोगमन्तरेण तदर्थप्रत्यायनप्रागल्भ्यं साभिप्रायत्वम् । लक्ष्यलक्षणयोरानुरूप्यं निरूपयति— **आश्रयः कृतधियामिति** । **एतेनेति** । न्यायेनेति शेषः । **सुकेश्या** इत्यत्र कवेरभिप्रेतं केशसौष्ठवं कलापिकलापकदर्थनसामर्थ्यं केशहस्तस्य समर्पयतीति

## अर्थवैमल्यं प्रसादः ॥ ३ ॥

अर्थस्य वैमल्यं प्रयोजकमात्रपदपरिग्रहे प्रसादः ।

यथा— 'सवर्णा कन्यका रूपयौवनारम्भशालिनी'

विपर्ययस्तु—'उपास्तां हस्तौ मे विमलमणिकाञ्चीपदमिदम् ।'

काञ्चीपदमित्यनेनैव नितम्बस्य लक्षितत्वात् विशेषणस्याप्रयोजकत्वमिति ।

## घटना श्लेषः ॥ ४ ॥

क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो घटना । स श्लेषः ।

---

साभिप्रायत्वम् । अस्य च विपर्ययः— व्यर्थमपुष्टार्थं च । अपुष्टार्थस्य दोषत्वम् 'नापुष्टार्थत्वात्' इति सूत्रे वक्ष्यते । व्यर्थं यथा– 'श्यामां श्यामलिमानमानयत भोः' इत्यत्र श्यामाशब्दः कृष्णत्वमपि प्रतिपादयतीति श्यामलिमानमानयतेति श्यामलिम्नः करण व्याहतमिति व्यर्थम् । 'चापाचार्यस्त्रिपुरविजयी' इत्यादौ 'तारकारिः' इत्यस्य स्थानेऽनुप्रासानुरोधात्प्रयुक्तम् 'कार्तिकेयः' इति पदमपुष्टार्थम् ।

प्रसादं प्रसञ्जयितुमाह-- **अर्थवैमल्यमिति** । **प्रयोजकमात्रपदपरिग्रह इति** । विवक्षितार्थसमर्पकपदमात्रप्रयोगेऽर्थस्य यद्वैमल्यं स प्रसादः । न च पञ्चमप्रौढिप्रसादयोः को भेद इति वाच्यम् । तयोः परस्परपरिहारेण दर्शनात् । यथा— 'रतिविगलितबन्धे केशहस्ते' इत्यादौ 'कृशाङ्ग्याः' इति पाठे वैमल्येऽपि न साभिप्रायत्वम् । 'अवन्ध्यकोपस्य विहन्तुरापदाम्' इत्यादौ साभिप्रायत्वेऽपि नार्थवैमल्यम् । **सवर्णेत्यादि** । स्पष्टम् । अस्य विपर्ययोऽपुष्टार्थमनर्थकं च । तत्राद्यमुदाहरति— **विपर्ययस्त्विति** । **विशेषणस्याप्रयोजकत्वमिति** । अपुष्टार्थत्वमित्यर्थः । अनर्थकं तु प्रागुदाहृतम् ।

श्लेषमुन्मेषयितुमाह— **घटनेति** । मणिपुत्रिकादिषु मुखाद्यवयवयोजनेऽपि श्लेषणं घटना भवति, सा मा भूदित्याह— **क्रमेति** । नेत्रनिमीलनादीनां यः **क्रमः** परिपाटी, **कौटिल्यं** च, तयोरनुल्बणत्वेनोपपत्त्या युक्ततया पृच्छाक्षेपरूपतया बाधाभावस्वभावतया च योजनं घटना विवक्षिता । उदाहरति—

यथा—

'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥'

शूद्रकादिरचितेषु प्रबन्धेष्वस्य भूयान् प्रपञ्चो दृश्यते।

**अवैषम्यं समता॥ ५॥**

अवैषम्यं प्रक्रमाभेदः समता। क्वचिद्धि प्रक्रमोऽपि भिद्यते।

यथा—

'च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम्॥'

---

**दृष्ट्वेति**। प्रियतमयोरेका स्वकीया, अपरा तत्सखी प्रच्छन्नानुरागा। अन्यथा नास्त्येकासनसंगतिः। निमील्यमाननयना च न द्वेष्या; तथात्वे हि 'प्रियतमे' इति कथम्। क्रीडामनुबध्नातीति क्रीडानुबन्धं तच्च तत् छलं च। विहितं क्रीडानुबन्धच्छलं नेत्रनिमीलनकापट्यं येन स तथोक्तः। अस्य विपर्ययो लोकविरुद्धत्वम्। यथा हि मधुरायाः सौवीरेषु सत्ता, यथा मधुराया म्लोषणसत्ता, तथैव एकासने प्रसिद्धसपत्न्योरवस्थिति। यथा मधौ कदम्बविकासः, तथा सपत्नीसंनिधावेकस्याः क्रीडा। यथा कलिकामकरन्दो गोष्पदपूरः, तथा क्रमेण युगपद्वा, द्वयोरेकस्या वा निधुवनमिति देशकालस्वभावैर्विरुद्धम्। प्रबन्धान्तरेषु भूयिष्ठमुदाहरणमस्ति, तदूहनीयमित्याह— **शूद्रकेति**।

समतां समुन्मीलयितुमाह— **अवैषम्यमिति**। अवैषम्यं नाम प्रक्रमाभेदः, सुगमत्वं वा भवतीत्यभिसंधाय प्राथमिकं पक्षमुपक्षिपति— **अवैषम्यं प्रक्रमाभेद इति**। प्रक्रमस्याभेदो भेदाभावः; तत्प्रतिपत्तेः प्रक्रमभेदप्रतिपत्तिपूर्वकत्वात् प्रक्रमभेदं दर्शयितुं प्रथमतः प्रत्युदाहरणं दर्शयति— **क्वचिद्धि प्रक्रम**

ऋतुसंधिप्रतिपादनपरेऽत्र द्वितीये पादे प्रक्रमभेदः, मलयमरुतामसाधारणत्वात् । एवं द्वितीयः पादः पठितव्यः— 'मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः' इति । सुगमत्वं वा अवैषम्यमिति ।

यथा—

'का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥'

प्रत्युदाहरणं सुलभम् ।

## अर्थदृष्टिः समाधिः ॥ ६ ॥

अर्थस्य दर्शनं दृष्टिः । समाधिकारणत्वात् समाधिः । अवहितं हि चित्तमर्थान् पश्यतीत्युक्तं पुरस्तात् ।

---

इति । अत्र प्रक्रमभेदं प्रतिपादयति— **ऋतुसंधीति** । ऋत्वोः शिशिरवसन्तयोः संधिः । **असाधारणत्वात्**— वसन्तैकधर्मत्वादित्यर्थः । इदमेवोदाहरणयितुं पाठान्तरं प्रकल्पयति— **एवं द्वितीय इति** । 'मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः' इति पाठे प्रक्रमाभेदः स्फुटः । विवेकिनोऽत्र शिष्या इति कथमवैषम्यं प्रक्रमाभेद इति तत्रारुच्या पक्षान्तरमुपक्षिपति— **सुगमत्वं वेति** । उदाहरति— **का स्विदिति** । अत्र सुगमत्वं सुगमम् । **प्रत्युदाहरणं सुलभमिति** । अस्य विपर्ययः क्रमादपक्रमं क्लिष्टत्वं च । तदुभयमपि पूर्वमुदाहृतं द्रष्टव्यम् ।

समाधिं संप्रधारयितुमाह— **अर्थदृष्टिरिति** । ननु समाधिरवधानम्, दर्शनं तु ज्ञानविशेषः । कथमुभयोः सामानाधिकरण्यमित्यत आह— **समाधिकारणत्वादिति** । समाधिः कारणं यस्येति बहुव्रीहिः कार्यकारणयोरुभयोरभेदमुपचर्योक्तमित्यर्थः । कार्यकारणभावमेव ज्ञापयति— **अवहितं हीति** । 'चित्तैकाग्र्यमवधानम्' इति सूत्रे प्रागुक्तमित्यर्थः । 'सद्यःकृत्तद्विरदरदनच्छेदगौरैः' इत्यादौ यथा च्छेदश्छिद्यमाने दन्तादौ पर्यवस्यति, तथा दर्शनमत्र दृश्यमानेऽर्थे पर्यवस्यतीति भवत्ययमर्थगुणः ।

## अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च ॥ ७ ॥

योऽसावर्थः प्रस्तुतः, सोऽर्थो द्विविधः— अयोनिरन्यच्छायायोनिश्चेति । अयोनिः अकारणः, अवधानमात्रकारण इत्यर्थः । अन्यस्य काव्यस्य च्छाया अन्यच्छाया, तद्योनिः ।

तद्यथा—

'आश्वपेहि मम शीधुभाजनाद्यावदग्रदशनैर्न दृश्यसे ।
चन्द्र मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥'

'मा भैः शशाङ्क मम शीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसंगमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥'

अत्र पूर्वस्य श्लोकस्यार्थोऽयोनिः । द्वितीयस्य च अन्यच्छायायोनिरिति ।

## व्यक्तः सूक्ष्मश्च ॥ ८ ॥

द्वैविध्यमर्थस्य दर्शयितुमाह— **अर्थो द्विविध** इति । व्याख्यातुं पूर्वसूत्रार्थमनुवदति— **योऽसाविति** । अयोनिरिति न विद्यते योनिः कारणं यस्येति विग्रहमभिसंधायाभिधत्ते—**अयोनिरकारण** इति । कथमसति कारणमात्रे कार्योत्पत्तिरित्याशङ्क्य कवित्वबीजप्रतिभोन्मेषप्रयोजकमवधानमेवात्र कारणमित्यवगमयितुं नञा प्रसिद्धकारणं प्रतिषिध्यत इत्याह— **अवधानेति** । विधान्तरं व्याकरोति—**अन्यस्य काव्यस्येति** । तद्योनिरित्यत्र सा च्छाया योनिर्यस्येति बहुव्रीहिः । प्रथमं भेदं दर्शयति— **आश्वपेहीति** । स्पष्टमुदाहरणम् । विधान्तरं व्युत्पादयति— **मा भैरिति** । बिभेषीत्यत्र मत्त इत्यध्याहार्यम् । स्त्रीणां प्रियस्य पुरतः स्ववैदग्ध्यप्रकटनमुचितमेवेत्यवगन्तव्यम् । लक्ष्ये लक्षणमवगमयति— **अत्र पूर्वस्येति** । पूर्वभाविना कविना कृतत्वात् ।

द्विविधस्याप्यर्थस्य द्वैविध्यं दर्शयितुमाह— **व्यक्तः सूक्ष्मश्चेति** ।

अयोनिरन्यच्छायायोनिश्च योऽयमर्थः, स द्वेधा— व्यक्तः सूक्ष्मश्च । व्यक्तः स्फुट उदाहृत एव ।

सूक्ष्मं व्याख्यातुमाह—

**सूक्ष्मो भाव्यो वासनीयश्च ॥ ९ ॥**

सूक्ष्मः खलु द्वेधा भवति— भाव्यः, वासनीयश्च । शीघ्रनिरूपणागम्यो भाव्यः । एकाग्रताप्रकर्षगम्यो वासनीय इति ।

भाव्यो यथा—

'अन्योन्यसंवलितमांसलदन्तकान्ति
सोल्लासमाविरलसंवलिताधतारम् ।
लीलागृहे प्रतिकलं किलिकिञ्चितेषु
व्यावर्तमाननयनं मिथुनं चकास्ति ॥'

---

व्याचष्टे— अयोनिरिति । व्यक्तार्थद्वयस्य प्रागुक्तमुदाहरणद्वयं प्रत्येतव्यमित्याह— उदाहृत एवेति ।

सूक्ष्मविभागं दर्शयितुं सूत्रमवतारयति—**सूक्ष्ममिति** । विभागं व्युत्पादयति— **सूक्ष्मः खल्विति** । भावुकानामवधानमात्रेण विमर्शो भावना, तद्योग्यो भाव्यः । सहृदयसद्व्यवहारसमुल्लसितसंस्कारसंपन्नो योऽवधानप्रकर्षस्तेन गम्यो वासनीयः । तदिदमभिसंधायाह— **शीघ्रेति** । आद्यमुदाहरति— **भाव्यो यथेति** । लीलागृहे मिथुनमुक्तविधं चकास्तीति वाक्यार्थः । अन्योन्यसंवलितमांसलदन्तकान्तीत्यनेन स्मितसंलापाधरास्वादादयः, सोल्लासमित्यनेन हर्षौत्सुक्यादयः, अलसमित्यनेन श्रमाङ्गदौर्बल्यादयः, किलिकिञ्चितेषु व्यावर्तमाननयनमित्यनेन प्रणयकलहगर्वभयकम्पादयश्च व्यज्यन्ते; 'क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलिकिञ्चितम्' इति दशरूपके तल्लक्षणकथनात् । अत्र मिथुनमालम्बनविभावः । लीलागृहमुद्दीपनविभावः । अधरास्वादाङ्कमस्मितकम्पनयनव्यावर्तनभ्रूभेदादयोऽनुभावाः । उल्लासोन्मीलितहर्षौत्सुक्यादयः किलिकिञ्चिताक्षिप्तक्रोधशोकभयगर्वाश्च संचारिणः । इत्थं विभावानुभावसंचारिभिरास्वादनीयतामापाद्यमानो रतिलक्षणः स्थायी भावः

वासनीयो यथा—

'अवहित्थवलितजघनं विवर्तिताभिमुखकुचतटं स्थित्वा ।
अवलोकितोऽहमनया दक्षिणकरकलितहारलतम् ॥'

उक्तिवैचित्र्यं माधुर्यम् ॥ १० ॥

उक्तेर्वैचित्र्यं यत्, तन्माधुर्यमिति

यथा—

'रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात्

---

साधारण्येन चर्व्यमाणैकप्राणः संभोगशृङ्गारो रसः । तदुक्तं दशरूपके, 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥' इति । वासनीयमुद्भासयति— **वासनीय इति** । **अवहित्थेति** । अवहित्थमाकारगोपनम् । दुर्लभस्त्वत्संभोगः, त्वय्येव लग्नमिदं मदीयं मनः, दुरन्तसंतापशान्तये हारलतिकेयमेका मयि दाक्षिण्यमवलम्बत इत्येवं स्वाभिप्रायप्रकाशनमवधानप्रकर्षेणात्र सहृदयहृदयसंवेद्यम् । अत्र विप्रलम्भशृङ्गारः । विभावादयः स्वयमूह्याः । अस्य गुणस्य विपर्ययो ग्राम्यत्वम् 'स्वपिति यावत्' इत्यादौ द्रष्टव्यम् ।

माधुर्यं पर्यालोचयितुमाह—**उक्तिवैचित्र्यमिति** । वर्ण्यमानस्यार्थस्य प्रकर्षे प्रतिपाद्ये भङ्ग्यन्तरेणोक्तिरुक्तिवैचित्र्यम् । **रसवदमृतमिति** । 'कस्यचिन्नागरिकस्येयमुक्तिः । अमृतं रसवद्भवत्येव । मधून्यपि नान्यथा, रसवन्त्येव । प्रसन्नरसं चूतस्यापि फलमधिकं मधुरमेव । कः संदेह इति सर्वत्रानुषज्यते । तथापि रसान्तरवित् सकृदपि रसविशेषाभिज्ञो जनो मध्यस्थः सन् वदतु । इह लोके प्रियादशनच्छदादन्यत् यद्वस्तु स्वादु स्यात्, तत् वदतु । रसज्ञोऽपक्षपाती चेत् अन्यत्स्वादु भवतीति न वदेत्, तादृशवस्त्वन्तरासंभवादित्यर्थः । नानाविधोप-

## अपारुष्यं सौकुमार्यम् ॥ ११ ॥

परुषेऽर्थे अपारुष्यं सौकुमार्यमिति ।

यथा— मृतं यशःशेषमित्याहुः, एकाकिनं देवताद्वितीयमिति, गच्छेति साधयेति च ।

## अग्राम्यत्वमुदारता ॥ १२ ॥

ग्राम्यत्वप्रसङ्गे अग्राम्यत्वमुदारता ।

यथा—

'त्वमेवंसौन्दर्या स च रुचिरतायां परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अयि द्वंद्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं चेत्स्याज्जितमिह तदानीं गुणितया ॥'

मानातिशायि दशनच्छदमाधुर्यमिति वक्तव्ये, रसवदमृतमित्यादिभङ्गयन्तरेण प्रतिपादनादत्र माधुर्यम् । अस्य गुणस्य विपर्ययो ह्येकस्यैवार्थस्य पुनः पुनः कथनमित्येकार्थत्वम्, प्राय एकार्थश्रुतेर्वैरस्यात् कष्टत्वं वा ।

सौकुमार्यं समाख्यातुमाह— **अपारुष्यमिति** । परुषे अमङ्गलातङ्कदायिन्यर्थे वर्णनीये यदपारुष्यम्, तत् सौकुमार्यमिति लक्षणार्थः । उदाहरणानि स्पष्टानि । अस्य गुणस्य विपर्ययोऽश्लीलत्वम् ।

उदारतामुदीरयितुमाह— **अग्राम्यत्वमिति** । अत्र कन्ये कामयमानं कान्त कामयस्वेति वक्तव्ये ग्राम्यार्थे, यदौचित्येन प्रतिपादनं सा उदारता । **त्वमेवमिति** । एवं वर्णनापथोत्तीर्णतयानुभूयमानं सौन्दर्यं यस्याः सा तथोक्ता । स च माधवो रुचिरतायां सौन्दर्यविषये, परिचितः संस्तुतः, प्रसिद्ध इति यावत् । युवां स च त्वं च । युवामेव परमिह लोके कलानां सीमानं भजथः । अयि हे मालति । वां युवयोः द्वंद्वं मिथुनं दिष्ट्या भाग्येन संवदति सदृशं भवतीत्यर्थः । अतः शेषं पाणिग्रहणरूपं मङ्गलं कर्म स्याच्चेत्, तदानी गुणितया गुणवत्त्वेन जितम्,

विपर्ययस्तु—

'स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं
मम करं स्वकरेण रुरोध सा ॥'

**वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ १३ ॥**

वस्तूनां भावानां स्वभावस्य स्फुटत्वं यत्, असौ अर्थव्यक्तिः ।

यथा—

'पृष्ठेषु शंखशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥'

---

युवयोर्गुणसंपत्तिर्विश्वातिशायिनी भवेदित्यर्थः । अत्र प्रथमं त्वं स चेति पृथक्त्वोक्तेः, ततो युवामिति मिश्रीकरणेन, तदनन्तरं द्वन्द्वमिति, ततः शेषमिति च विवक्षितार्थव्यञ्जनमुखेन फलपर्यवसायित्वमित्यौचित्यशालिना क्रमेण कामन्दक्या मालतीमुद्दिश्योक्तमिति स्पष्टमुदाहरणत्वम् । प्रत्युदाहरणं प्रत्याययितुमाह—**विपर्ययस्त्विति** । **स्वपितीति** । अत्र कश्चित् कामी वयस्याय रहस्य कथयति । अयं निकटे जनः परिसरसंचारी जनो यावत् स्वपिति यावता कालेन नियतं कर्म निर्वर्त्य निद्राति । तावत् तावन्तं कालं स्वपिमि । ते किमपैति तावता कालविलम्बेन तव का हानिर्भवति । इति उक्तप्रकारेण, शनैरुपांशु, निगद्य कथयित्वा, अनुमेखलं मेखलासमीपे, प्रसारितं मम मे करं स्वकरेण रुरोध निरुद्धवती । स्पष्टं ग्राम्यत्वम् ।

अर्थव्यक्तिं समर्थयितुमाह—**वस्त्विति** । व्याचष्टे—**वस्तूनामिति** । अशेषविशेषैर्वर्णने पुर इव प्रतिभासमानत्वमर्थस्य स्फुटत्वम् । उदाहरति—**पृष्ठेष्विति** । **शङ्खशकलच्छविषु पृष्ठेषु** चरमभागेषु, अलक्तकलोहिनीभी रेखाभिरङ्कितम्, गोरोचनावद्धरितानि बभ्रूणि कपिशानि बहिःपलाशानि यस्य तत्, कुमुदम्, पल्वलस्य

यथा वा—

'प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेसरै-
विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किंचिद्व्यधायि बहिर्दलै-
र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥'

**दीप्तरसत्वं कान्तिः ॥ १४ ॥**

दीप्ताः रसाः शृङ्गारादयो यस्य स दीप्तरसः । तस्य भावो दीप्तरसत्वं कान्तिः ।

यथा—

'प्रेयान्सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रच्युतपाणिसंपुटलसन्नीवीनितम्बं धृतो
धावित्वैव कृतप्रणाममहहा प्रेम्णो विचित्रा गतिः ॥'

एवं रसान्तरेष्वप्युदाहार्यम् ।

---

वेशन्तस्याम्भसि, आमोदते आमोदमुद्गिरतीति योजना । उदाहरणान्तरमाह **प्रथममिति** । प्रथममलसैः पृथुकेसरैः पर्यस्ताग्रं शैथिल्यशालिशिखरं स्थितम् । ततः परं विरलविरलैरत्यन्तशिथिलैरन्तःपत्रैर्मनागीषन्मिलितम् । तदनु बहिर्दलैर्वलनामात्रं संकोचक्रियारम्भमात्रं किंचित् व्यधायि । इत्थं वृद्धाब्जानां कदर्थना क्लेशदशा बभूवेति योजना । अस्य विपर्ययः संदिग्धत्वं क्लिष्टत्वं च ।

कान्तिं कथयितुमाह— **दीप्तरसत्वमिति** व्याचष्टे— **दीप्ता इति** । दीप्ताः विभावानुभावव्यभिचारिभिरभिव्यक्ताः । **प्रेयानिति** । अत्र विप्रलम्भपूर्वकः संभोगशृङ्गारः । **एवं रसान्तरेष्विति** । शृङ्गारो द्विविधः— संभोगो विप्रलम्भश्च । तत्राद्यः परस्परावलोकनपरिचुम्बनाद्यनन्तभेदादपरिच्छेद्यः । तत्रैको भेद उदाहृतः । विप्रलम्भस्तु परस्पराभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । तत्राद्यो यथा— 'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि । यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी

अत्र श्लोकाः—

**गुणस्फुटत्वसाकल्ये काव्यपाकं प्रचक्षते ।**
**चूतस्य परिणामेन स चायमुपमीयते ॥**

क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥' एवमन्येऽपि विप्रलम्भभेदा ज्ञातव्याः । वीरो यथा— 'क्षुद्राः संत्रासमेते विजहित हरयो भिन्नशक्रेभकुम्भा युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः । सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषो नन्वहं मेघनादः किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥' करुणो यथा—'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो धिक् प्राणान्पतितोऽशनिर्हुतवहो गात्रेषु दग्धे दृशौ । इत्थं गद्गदकण्ठरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥' अद्भुतो यथा— 'चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गी । लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ॥' हास्यो यथा— 'आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे । तारस्वनं प्रहितसीत्कमदात्प्रहारं हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥' भयानको यथा— 'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभिया भूयसा पूर्वकायम् । दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' रौद्रो यथा— 'एतत्करालकरवालनिकृत्तकण्ठनालोच्चलद्बहुलबुद्बुदफेनिलौघैः । सार्धं डमड्डमरुडाकृतिहूतभूतवर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि ॥' बीभत्सो यथा—'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्पृष्ठपीठाद्यवयवजटिलान्युग्रपूतीनि जग्ध्वा । आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंधिस्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥' शान्तो यथा–'अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥'

एवं भावा अप्युदाहार्याः ।

इत्थमर्थगुणान् समर्थ्य काव्यस्य गुणस्फुटत्वसाकल्याभ्यां तदभावेन चोपादेयत्वानुपादेत्वे सदृष्टान्तमाचष्टे—**गुणस्फुटत्वेति** । 'गुणानां स्फुटत्वं सा-

सुप्तिङ्संस्कारसारं यत् क्लिष्टवस्तुगुणं भवेत् ।
काव्यं वृन्ताकपाकं स्याज्जुगुप्सन्ते जनास्ततः ॥

गुणानां दशता त्यक्तो यस्यार्थस्तदपार्थकम् ।
दाडिमानि दशेत्यादि न विचारक्षमं वचः ॥ इति ।

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे

द्वितीयोऽध्यायः ॥

**समाप्तं चेदं गुणविवेचनं तृतीयमधिकरणम् ॥**

---

कल्यं च यत्, स चायं काव्यपाकः। सुप्तिङां संस्कारो यथाशास्त्रं प्रकृतिषु प्रत्यययोजनमेव सारः स्थिरांशो यस्य । क्लिष्टा अस्फुटा वस्तुनोऽर्थस्य गुणाः यस्य । अनेन स्फुटगुणव्यावृत्तिः सूचिता । वृन्ताकस्य पाक इव पाको यस्य । तत् काव्यम् । ततो जना जुगुप्सन्ते, किमुत कवय इति भावः । **गुणानामिति** । दशता दशसंख्यापरिमितेन वर्गेणेत्यर्थः । गुणदशकेन त्यक्त इत्यर्थः । 'पञ्चद्दशतौ वर्गे वा' इति निपातितो दशच्छब्दः । अपार्थकं वाक्यमुदाहरति— **दाडिमानीति** । 'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः' इति वाक्यं विचारयोग्यं न भवति । अतोऽलंकारशास्त्राद्दोषगुणस्वरूपं विज्ञाय कविर्दोषाञ्जह्यात्, गुणानाददीतेत्युपदेशः ॥

इति कृतरचनायामिन्दुवंशोद्वहेन
त्रिपुरहरधरित्रीमण्डलाखण्डलेन ।
ललितवर्चसि काव्यालंक्रियाकामधेना-
वधिकरणमयासीत्पूर्तिमेतत्तृतीयम् ॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामन[illegible]कारसू[illegible]
व्याख्यायां काव्यालंकारकामधेनौ गुणविवे[illegible] नाम
**तृतीयमधिकरणम् ॥**



# चतुर्थमधिकरणम् ॥

---*-

गुणनिर्वर्त्या काव्यशोभा; तस्याश्चातिशयहेतवोऽलंकाराः। तन्निरूपणार्थमालंकारिकमधिकरणमारभ्यते। तत्र शब्दालंकारौ द्वौ यमकानुप्रासौ क्रमेण दर्शयितुमाह—

**पदमनेकार्थमक्षरं चावृत्तं स्थाननियमे यमकम् ॥ १ ॥**

पदम् अनेकार्थं भिन्नार्थम् एकमनेकं वा तद्वत् अक्षरमावृत्तं स्थाननियमे सति यमकम्। स्ववृत्त्या सजातीयेन वा कार्त्स्न्यैकदेशाभ्यामनेकपादव्याप्तिः स्थाननियम इति। यानि त्वेकपादभागवृत्तीनि यमकानि दृश्यन्ते, तेषु श्लोकान्तरस्थसंस्थानयमकापेक्षयैव स्थाननियम इति।

निजसौन्दर्यनिर्धौतस्फुरन्मौक्तिकभूषणा।
प्रसादविशदालोका शारदा वरदास्तु मे ॥

आलंकारिकं चतुर्थमधिकरणमारभ्यते। अधिकरणद्वयसंघटनामुद्घाटयति—**गुणनिर्वर्त्येति**। गुणैर्निर्वर्त्या निष्पाद्या। अलंकारः प्रयोजनमस्येति आलंकारिकम्। 'प्रयोजनम्' इति ठक्। अलंकारा द्विविधाः—शाब्दाः, आर्थाश्च। तत्र शब्दप्रतिपत्तिपूर्विका अर्थप्रतिपत्तिरिति प्रथमं शब्दालंकारान् प्रतिपिपादयिषुस्तद्विभागं दर्शयति—**तत्रेति**। यमकं विवरीतुं यतते—**क्रमेणेति**। **पदमनेकार्थमिति**। अनेकार्थमिति पदविशेषणम्, न त्वक्षरविशेषणम्। गवादिश्लिष्टपदवन्नानार्थमात्रं न भवति; किंतु स्वरव्यञ्जनात्मकं भिन्नार्थं पदमिह विवक्षितमित्याह—**भिन्नार्थमिति**। **अनेकमिति**। पदमिति जातावेकवचनमिति भावः। 'तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्। वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥' इति भामहेनोक्तं प्रत्याख्यातुमाह—**स्थाननियमे सतीति**। नियमनमत्र गुणनम्, आवृत्तिरिति यावत्। यम्यते गुण्यते आवर्त्यते पदमक्षरं वेति यमः। बहुलग्रहणात् कर्मणि घप्रत्ययः। यम एव यमकम्। अयमत्र वाक्यार्थः—

स्थानकथनार्थमाह-

**पादाः पादस्यैकस्यानेकस्य चादिमध्यान्तभागाः स्थानानि ॥ २ ॥**

**पादाः, एकस्य च पादस्यादिमध्यान्तभागाः, अनेकस्य च पादस्य त एव स्थानानि ।**

भिन्नार्थमेकमनेकं वा पदम्, तद्वदेकमनेकं वाक्षरं च स्थाननियमे सत्यावृत्तं यमकं भवतीति । तथा च पदयमकम्, अक्षरयमकमिति च द्वैविध्यं दर्शितं भवति । कीदृगत्र स्थाननियम इति, तत्राह— **स्ववृत्त्येति** । यदेव पदमक्षरं वा यमकनिबन्धनं तदेव यदि पादान्तरे वर्तते यथा 'भ्रमर द्रुमपुष्पाणि' इत्यादौ, तत्र स्ववृत्त्या आवृत्तिः । 'सजातीयनैरन्तर्ये चास्य प्रकर्षः' इतीहैव वक्ष्यमाणयुक्त्या सजातीयं यत्र पादान्तरे वर्तते यथा 'हन्त हन्तः' इत्यादौ, तत्र सजातीयस्यावृत्तिः । नियतस्थानावृत्तसमानसंख्याकाक्षरसंनिवेशोऽत्र साजात्यम् । कात्स्न्र्येन समस्तपादगतत्वेन । एकदेशेन पादस्यादिमध्यान्तभागगतत्वेनेत्यर्थः । ननु 'अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् । यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम्' इत्यादौ पादान्तरव्याप्तिलक्षणस्थाननियमासंभवेन यमकता न स्यात्; अतो लक्षणस्याव्याप्तिरिति, तत्राह— **यानि त्विति** । एकस्यैव पादस्य भागे वृत्तिर्येषां तानि एकपादभागवृत्तीनि, तेषु 'द्रुमवतीमवतीर्य वनस्थलीम्' इत्यादिश्लोकान्तरस्थ संस्थानं यस्य तत्तथाभूतं यमकम्, तदपेक्षया सजातीयेनानेकपादव्याप्तिर्भवतीति भवत्येव स्थाननियमः ।

यमकस्थानानि दर्शयितुं सूत्रमवतारयति-- **स्थानकथनार्थमिति** । व्याचष्टे— **पाद इति** । अत्रायं विभागः-- प्रथमपादो द्वितीये तृतीये चतुर्थे क्रमेण यम्यते । एवं द्वितीयस्तृतीये चतुर्थे च । तृतीयश्चतुर्थे । तथा प्रथमो द्वितीयादिषु त्रिषु युगपद्यम्यत इति सप्तधा भवति । प्रथमो द्वितीये तृतीयश्चतुर्थे, प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वौ भेदाविति पादयमकं नवधा । पादस्य त्रेधा विभागपक्षे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, प्रथमादिपादमध्यभागो द्वितीयादिपादमध्यभागेषु, प्रथमादिपादान्तभागो द्वितीयादिपादा-

पादयमकं यथा—

'असज्जनवचो यस्य कलिकामधुगर्हितम् ।
तस्य न स्याद्विषतरोः कलिकामधु गर्हितम् ॥'

एकपादस्यादिमध्यान्तयमकानि यथा—

'हन्त हन्तररातीनां धीर धीरर्चिता तव ।
कामं कामन्दकी नीतिरस्या रस्या दिवानिशम् ॥'

'वसुपरासु परासुमिवोज्झतीष्वविकलं विकलङ्कशशिप्रभम् ।
प्रियतमं यतमन्तुमनीश्वरं रसिकता सिकतास्विव तासु का ॥'

न्तभागेषु यम्यत इति सप्तविंशतिधा । खण्डभेदकल्पनया परिगणनायां भूयसी भेदसंख्येत्युपरम्यते । तत्र दिङ्मात्रं दर्शयितुं पादयमकं तावदुदाहरति— **पादयमकमिति** । कलेः कामं दोग्धीति कलिकामधुक् । तथाविधम् असज्जनस्य खलस्य वचो यस्य अर्हितं पूजितं भवति, तस्य पुंसः, विषतरोः कलिकामधु कोरकमकरन्दः गर्हितं न स्यात् तदप्युपादेयं स्यादित्यर्थः ।

अथैकस्य पादस्यादिमध्यान्तेषु यमकं क्रमेणोदाहरति— **एकपादस्येति** । **हन्तेति** । अरातीनां हन्तः, धीर प्राज्ञ । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । तव धीः अर्चिता । हन्तेति हर्षे । अतः कामन्दकसंबन्धिनी नीतिः कामन्दकप्रणीता दण्डनीतिरित्यर्थः । अस्यास्तव धियः काममत्यर्थं रस्या अस्वादनीया । नन्वत्र पदयमके द्वयोरपि पदत्वाभावे कथं पदयमकमिति न चोदनीयम्, यमकनिबन्धनयोर्द्वयोरेकस्य पदत्वे सति तदन्यस्य संहिताकाले तदाकारानुकारितया पदावभासजनकत्वाद्भवत्येव पदयमकमिति ।

**वसुपरास्विति** । अविकल संपूर्णमित्यर्थः । विकलङ्कशशिप्रभम् । यतः उपरतः मन्तुः अपराधो यस्य तथाविधं निरागसमित्यर्थः । 'आगोऽपराधो मन्तुश्च' इत्यमरः । अनीश्वरम् ऐश्वर्यरहितम् । प्रियतमं परासुं मृतमिव उज्झतीषु त्यक्तवतीषु वसुपरासु वेश्यासु । सिकतास्विव । रसिकता रसः आसामस्तीति रसिकाः । 'अत इनिठनौ' इति ठन्प्रत्ययः । तासां भावो रसिकता, का न का-

'सुदृशो रसरेचकितं चकितं भवतीक्षितमस्ति मितं स्तिमितम्।
अपि हासलवस्तवकस्तव कस्तुलयेन्ननु कामधुरां मधुराम्॥'

पादयोरादिमध्यान्तयमकानि यथा—

'भ्रमर द्रुमपुष्पाणि भ्रम रत्यै पिबन् मधु।
का कुन्दकुसुमे प्रीतिः काकुं दत्त्वा विरौषि किम्॥'

'अप्यशक्यं त्वया दत्तं दुःखं शक्यन्तरात्मनि।
बाष्पो वाहीकनारीणां वेगवाही कपोलयोः॥'

चित् तासु रसिकतेत्यर्थः। अत्र प्रियतममित्यक्षरयमकत्वेन पदावृत्त्यसंभवान्नेद-मुदाहरणम्।

**सुदृश इति**। रसेन रागविशेषेण रेचकित भ्रमितम्। चकितं भयसंभ्रान्तम्। 'चकितं भयसंभ्रमः' इत्यमरः। मितं स्तोकं स्तिमितं निभृतं सुदृश ईक्षणं भवति त्वयि अस्ति। अपि किंच, हासस्य लवो लेशः। 'लवलेशकणाणवः' इत्यमरः। स्तबक इव हासलवो हासलवस्तवकः। 'उपमितं व्याघ्रादिभिः' इति समासः। वबयोरभेदः। सोऽपि त्वय्यस्तीत्यनुषज्यते। अतः कः पुमान् तव। मधुरां मनोज्ञां कामस्य धूः कामधुरा ताम्। 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः। ननु तुलयेत् न कोऽपि तुलयेत्, तव कामधुरां परिच्छेत्तुं न शक्नुयादित्यर्थः।

अथ पादयोरादिमध्यान्तभागेषु यमकं क्रमेणोदाहरति— **पादयोरिति**। हे भ्रमर, मधु पिबन्, रत्यै सुखाय, द्रुमपुष्पाण्युद्दिश्य भ्रम संचर। कुन्दकुसुमे का प्रीतिः। काकुं ध्वनिविकारं दत्त्वा 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः। किं विरौषि। 'रु शब्दे' इति धातुः।

**अप्यशक्यमिति**। अशक्यम् असह्यम्, दुःखं शकीनां शकाख्यजनपदस्त्रीणाम् अन्तरात्मनि। त्वया दत्तम्। त्वयेति कर्तृपदम्; तदर्थस्तु प्रकरणानुसारेण द्रष्टव्यः। अपि किंच, वाहीकनारीणां कपोलयोः, वेगवाही वेगेन वहति प्रवहतीति वेगवाही बाष्पः दत्त इत्यनुषज्यते।

'सपदि कृतपदस्त्वदीक्षितेन'
स्मितशुचिना स्मरतत्त्वदीक्षितेन ।
भवति बत जनः सचित्तदाहो
न खलु मृषा कुत एव चित्तदाहो ॥'

एकान्तरपादान्तयमकं यथा—

'उद्वेजयति भूतानि यस्य राज्ञः कुशासनम् ।
सिंहासनवियुक्तस्य तस्य क्षिप्रं कुशासनम् ॥'

एवमेकान्तरपादादिमध्ययमकान्यूह्यानि ।

समस्तपादान्तयमकं यथा

'नतोन्नतभ्रूगतिबद्धलास्यां
विलोक्य तन्वीं शशिपेशलास्याम् ।
मनः किमुत्ताम्यसि चञ्चलास्यां
कृती स्मराज्ञा यदि पुष्कला स्याम् ॥'

---

**सपदीति** । स्मितशुचिना कामतत्त्वदीक्षितेन त्वदीक्षितेन सपदि कृतपदो जनस्तदैव सचित्तदाहो भवति । न कुतश्चित् कुतोऽपि न मृषा खलु । अहो ।

एकान्तरितपादान्तयमकमाह-- **एकान्तरेति** । यस्य राज्ञः कुशासनं कुत्सितं शासनं भूतानि प्राणिन उद्वेजयति । सिंहासनवियुक्तस्य तस्य कुशासनं कुशमयमासनं भवति ।

**एवमिति** । एकान्तरितपादादियमक यथा-- 'क्रोडतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् । करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम् ॥ एकान्तरितपादमध्ययमकं यथा--'यान्ति यस्यान्तिके सर्वेऽप्यन्तकान्तमुपाधय. । तं शान्तचित्तवृत्तान्तं कालीकान्तमुपास्महे ॥' इति ।

चतुर्ष्वपि पादेषु अन्तयमकमुदाहरति-- **नतोन्नतेति** । हे चञ्चल मनः, नते उन्नते च भ्रुवौ तयोर्गतिभिर्वलनभङ्गीभिर्बद्धं लास्यं शृङ्गारनटनं यया ताम् । शशीव पेशलं मनोज्ञमास्यं यस्यास्तां तन्वीं विलोक्य किमुत्ताम्यसि । अस्यां तन्व्यां स्मराज्ञा यदि पुष्कला भवेत्, तर्हि कृती स्यामिति संबन्धः ।

एवं समस्तपादादिमध्ययमकानि व्याख्यातव्यानि । अन्ये च संकरजातिभेदाः सुधियोत्प्रेक्ष्याः ।

अक्षरयमकं त्वेकाक्षरमनेकाक्षरं च ।

एकाक्षरं यथा—

'नानाकारेण कान्ताभ्रूराराधितमनोभुवा ।
विविक्तेन विलासेन ततक्ष हृदयं नृणाम् ॥'

एवं स्थानान्तरयोगेऽपि द्रष्टव्यः ।

सजातीयनैरन्तर्यादस्य प्रकर्षो भवति ।'

स चायं हरिप्रबोधे दृश्यते; यथा—

---

एवमिति । समस्तपादादियमकं यथा—'सप्रसालंकृताकारा मारसामोदनिर्भरा । सारसालवृतप्रान्ता सा रसाढ्या सरोजिनी ॥' समस्तपादमध्ययमकं यथा—'स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् । अमायते यतेऽप्यभूत्सुखाय ते यते क्षयम् ॥'

अन्ये चेति । 'सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम् । मता फणवतोऽवतो रसपरा परास्तवसुधा सुधाधिवसति ॥' इत्यादि ।

अक्षरयमकम् अध्यक्षयितुं तद्विभागमाह-- अक्षरयमकमिति । तत्राद्यमुदाहरति-- नानेति । नानाकारेण विविक्तेन शुद्धेन आराधितमनोभुवा विलासेन । कान्ताभ्रूः, नृणां हृदयं ततक्ष । 'अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् । धातूपसर्गयोः,शास्त्रे धातुरेव हि तादृशः ॥' इति वचनात् विशब्दस्य धात्वंशत्वेनाक्षरावृत्तिरेवेति न पदावृत्तिशङ्कावकाशः ।

एवमिति । स्थानान्तरयोगे यथा—'सभासु राजन्नसुराहतैर्मखैर्महीसुराणां वसुराजितैः स्तुताः । न भासुरा यान्ति सुरान्न ते गुणाः प्रजासु रागात्मसु राशितां गताः' ॥ इति, 'अकलङ्कशशाङ्काङ्कामिन्दुमौलेर्मतिर्मम' इत्यादि ।

इत्थमक्षरयमकमुदाहृत्य तदेव नैरन्तर्येणावृत्तमुदाहर्तुमुपश्लोकयति-- सजातीयेति ।

'विविधधववना नागगर्द्धर्द्धनाना-
विविततगगनानाममज्जज्जनाना।
रुरुशशललना नाववन्धुं धुनाना
मम हि हिततनानाननस्वस्वनाना॥'

अनया च वर्णयमकमालया पदयमकमाला व्याख्याता।

**भङ्गादुत्कर्षः॥ ३॥**

उत्कृष्टं खलु यमकं भङ्गाद्भवति।

**शृङ्खला परिवर्तकश्चूर्णमिति भङ्गमार्गः॥ ४॥**

**विविधेति**। अत्र पारावारपरिसरभुवमभिलक्ष्य हलधरं हरिराह। विविधानि बहुविधानि धवानामर्जुनानां वनानि 'यस्यां सा विविधधववना 'धवो वृक्षे नरे पत्यावर्जुने च द्रुमान्तरे' इति वैजयन्ती। नागाः कुञ्जराः सर्पा वा तान् गृध्यन्ति अभिलषन्तीति नागगर्द्धाः; तथाविधा ऋद्धाः समृद्धा ये नानाविधा वयः पक्षिणः, तैर्विततं व्याप्तं गगनं यस्याः सा नागगर्द्धर्द्धनानाविविततगगना। न विद्यते नामो नमनं यस्मिन् कर्मणि तत्तथा मज्जन्तो जना यस्यां सा अनाममज्जज्जना। अनिति प्राणितीति अना, स्फुरन्तीति यावत्। अथवा न विद्यन्ते नरो यस्यां सा अना। समासान्तविधेरनित्यत्वात् कबभावः। रुरूणां शशानां च ललनं विलसनं यस्यां सा रुरुशशललना। नौ आवयोः, अबन्धुं शत्रुं धुनाना। हि यस्मात् कारणात्। मम हितं तनोतीति हिततना। न विद्यते आननं यस्यासौ अनाननः, स्व आत्मीयः स्वन एव अनः प्राणनं यस्याः सा अनाननस्वस्वनाना। एवंविधा समुद्रभूमिरिति वाक्यार्थः।

**पदयमकमालेति**। 'स्वभुवे स्वभुवे भयोभयोर्भवतां भवताम्भसि ते भसिते' इत्यादि द्रष्टव्यम्।

अथ यमकगोचरमेव किंचिद्वैचित्र्यमासूत्रयितुमाह— **भङ्गादुत्कर्ष इति**। व्याचष्टे— **उत्कृष्टमिति**। भङ्गो नाम वर्णविच्छेदः।

भङ्गभेदान् भणितुमनुभाषते— **शृङ्खलेति**। वृत्तिः स्पष्टार्था।

एते खलु शृङ्खलादयो यमकभङ्गानां प्रकारा भवन्ति ।

तान् क्रमेण व्याचष्टे—

## वर्णविच्छेदचलनं शृङ्खला ॥ ५ ॥

वर्णानां विच्छेदो वर्णविच्छेदः, तस्य चलनं यत्, सा शृङ्खला ।

यथा— कलिकामधुशब्दे कामशब्दविच्छेदे च तस्य चलनम्, लिमवर्णयोर्विच्छेदात् ।

## सङ्गविनिवृत्तौ स्वरूपापत्तिः परिवर्तकः ॥ ६ ॥

अन्यवर्णसंसर्गः सङ्गः, तद्विनिवृत्तौ स्वरूपस्य अन्यवर्णतिरस्कृतस्य आपत्तिः प्राप्तिः परिवर्तकः । यथा—'कलिकामधुगर्हितम्' इत्यत्र अर्हितमिति पदं गकारस्य व्यञ्जनस्य सङ्गात् गर्हितमित्यन्यस्य रूप-

---

शृङ्खलादीन् संकथयितुं सूत्रमवतारयति— **तानिति** । विग्रहं विवृण्वन् व्याचष्टे—**वर्णानामिति** । लक्ष्यलक्षणयोरानुकूल्यमुन्मीलयति—**यथेति** । 'कलिकामधुशब्दे कामशब्दविच्छेदे च तस्य चलनम्' इति पाठः । अत्र चस्त्वर्थे । पदद्वयात्मके कलिकामधुशब्दे, कामशब्दस्य तु विच्छेदे पृथक्कारे तस्य कलिकामधुशब्दस्य चलनं भवति । कुत इत्यत आह— **लिमवर्णयोरिति** । यद्वा, 'कलिकामधुशब्दे कामशब्दविच्छेदे मधुशब्दविच्छेदे च तस्य चलनम्' इति पाठान्तरम् । अत्र चः समुच्चये । अत्र कामशब्दस्य विच्छेदे पृथक्कारे कलिकाविच्छेदस्य चलनं भवति, लिवर्णस्य विच्छेदात् । मधुशब्दस्य विच्छेदे पृथक्कारे कामविच्छेदस्य चलनं भवति, मवर्णस्य विच्छेदादित्यर्थः । शृङ्खलारूपेण वर्णविच्छेदप्रतीतेरयं भङ्गमार्गः शृङ्खलेति व्यपदिश्यते ।

परिवर्तकं कीर्तयितुमाह— **सङ्गेति** । तद्विनिवृत्तौ अन्यवर्णसाङ्गत्यविनिवृत्तौ । अन्यवर्णो व्यञ्जनम्, तेन तिरस्कृतस्य तिरोहितस्य स्वरूपस्यापत्तिः । अर्थान्तरभ्रमं निवारयति— **प्राप्तिरिति** । लक्ष्ये लक्षणं योजयति— **यथेति** ।

मापन्नम् । तत्र व्यञ्जनसङ्गे विनिवृत्ते स्वरूपमापद्यते— अर्हितमिति । अन्यवर्णसंक्रमेण भिन्नरूपस्य पदस्य ताद्रूप्यविधिरयमिति तात्पर्यार्थः। एतेनेतरावपि व्याख्यातौ ।

पिण्डाक्षरभेदे स्वरूपलोपश्चूर्णम् ॥ ७ ॥

पिण्डाक्षरस्य भेदे सति पदस्य स्वरूपलोपः चूर्णम् ।

यथा—

योऽचलकुलमवति चलं दूरसमुन्मुक्तशुक्तिमीनां कान्तः ।
साग्नि बिभर्ति च सलिलं दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तः ॥

अत्र शुक्तिपदे क्तीति पिण्डाक्षरम्, तस्य भेदे शुक्तिपदं लुप्यते, ककारतिकारयोरन्यत्र संक्रमात् । दूरसमुन्मुक्तशुक् अचलकुलम्, तिमीनां कान्तः समुद्रः ।

---

स्पष्टमन्यत् । नन्वन्यवर्णसंयोगे हि यमकत्वं संगच्छते, कथं तन्निवृत्तिरुपयुज्यत इत्याशङ्कय तात्पर्यमाविष्करोति— अन्यवर्णसंक्रमेणेति । एतेनेति । नानाविच्छेदशालिपदमेलने स्वरूपलाभः, भिन्नयोर्हलो पिण्डीकरणे च स्वरूपलाभ इति द्वौ भेदौ द्रष्टव्यौ ।

चूर्णकं वर्णयितुयाह—पिण्डाक्षरस्येति । पिण्डाक्षरस्य संयुक्ताक्षरस्य । उदाहरति—योऽचलकुलमिति । दूरे समुन्मुक्ता शुक् शोको येन । तिमीनां मत्स्यानां कान्तः प्रियः । उन्मुक्ता उद्गतमुक्ताः शुक्तय उन्मुक्तशुक्तयः मीनाश्च अङ्का यस्य स तादृक् अन्तः पर्यन्तो यस्य तादृशो यः समुद्रः । चलं भयचञ्चलं दूरसमुन्मुक्तशुक् अचलकुलमवति । दूरसं दुष्टरसं साग्नि सलिलं बिभर्ति च । लक्ष्ये लक्षणानुगममभिलक्षयति—अत्रेति । पिण्डाक्षरं दर्शयति—शुक्तिपदे क्तीति । तस्य पिण्डाक्षरस्य वर्णयोः शुगित्यत्र ककारस्य तिमीत्यत्र तिकारस्य च भेदे शुक्तिपदस्वरूपं लुप्यते; तत्र हेतुमाह— ककारेति । ककारतिकारयोः अन्यत्र शुक्तिपदे तिमिपदे च संक्रमादित्यर्थः । संक्रममेव दर्शयति— दूरसमुन्मुक्तशुगिति, तिमीनामिति च । विशेषणद्वयस्य यथासङ्ख्यं विशेष्यद्वयं दर्शयति— अचलकुलमिति, कान्तः समुद्र इति च ।

अत्र श्लोकाः—

अखण्डवर्णविन्यासचलनं शृङ्खलामला ।
अनेन खलु भङ्गेन यमकानां विचित्रता ॥

यदन्यसङ्गमुत्सृज्य नेपथ्यमिव नर्तकः ।
शब्दः स्वरूपमारोहेत्स ज्ञेयः परिवर्तकः ॥

पिण्डाक्षरस्य भेदेन पूर्वापरपदाश्रयात् ।
वर्णयोः पदलोपो यः स भङ्गश्चूर्णसंज्ञकः ॥

अप्राप्तचूर्णभङ्गानि यथास्थानस्थितान्यपि ।
अलकानीव नात्यर्थं यमकानि चकासति ॥

विभक्तिपरिणामेन यत्र भङ्गः क्वचिद्भवेत् ।
न तदिच्छन्ति यमकं यमकोत्कर्षकोविदाः ॥

आरूढं भूयसा यत्तु पदं यमकभूमिकाम् ।
दुष्येच्चेन्न पुनस्तस्य युक्तानुप्रासकल्पना ॥

विभक्तीनां विभक्तत्वं संख्यायाः कारकस्य च ।
आवृत्तिः सुप्तिङन्तानां मिथश्च यमकाद्भुतम् ॥

प्रतिपादितेऽर्थे परसंवादं प्रकटयति— **अत्र श्लोका इति** । पद्यत्रयं स्पष्टार्थम् । भङ्गादुत्कर्ष इत्युपक्रम्य भङ्गमार्गेषु प्रकर्षं प्रतिपाद्य अन्यत्रापकर्षमवगमयितुमाह— **अप्राप्तेति** । अप्राप्तचूर्णभङ्गानीति विशेषणमलकेष्वपि योजनीयम्, **विभक्तीति** । विभक्तीनां परिणामो विपरिणामः, अन्यथाभाव इति यावत् । उदाहरणं तु 'शिवमात्मनि सत्त्वस्थान् पश्यतः पश्यन् शिवौ' इत्यादि द्रष्टव्यम् । **आरूढमिति** । यत्पदं भूयसा भूम्ना, यमकभूमिका यमकवदवभासमानत्वम्, आरूढम्, तत् दुष्येत् दुष्टं भवेत् । ननु न चेत्तद्यमकम्, तर्ह्यनुप्रासोऽस्त्विति शङ्कां शकलीकरोति— **न पुनरिति** । यथा दण्डिनोक्तम्, 'कालकाल गलकाल कालमुख—' इत्यादि । **विभक्तीनामिति** । प्रथमादीनां विभक्तीनां विभक्तत्वं, विविधत्वम्, एकवचनादिलक्षणायाः संख्यायाः कर्तृकर्मादेः

**शेषः सरूपोऽनुप्रासः ॥ ८ ॥**

**पदमेकार्थमनेकार्थं च स्थानानियतं तद्विधमक्षरं च शेषः। सरूपः अन्येन प्रयुक्तेन तुल्यरूपः अनुप्रासः।**

**ननु 'शेषोऽनुप्रासः' इत्येतावदेव सूत्रं कस्मान्न कृतम्? आवृत्तिशेषोऽनुप्रास इत्येव हि व्याख्यास्यते; सत्यम्; सिध्यत्येवावृत्तिशेषे; किंत्वव्याप्तिप्रसङ्गः; विशेषार्थं च सरूपग्रहणम्—कात्स्न्येनैवावृत्तिः, कात्स्न्यैकदेशाभ्यां च सारूप्यमिति।**

---

कारकस्य विभक्तत्वन्, सुबन्तानां तिङन्तानां च पदानामावृत्तिर्यत्र, तत् यमकाद्भुतम् अतिशयितं यमकमित्यर्थः। क्रमेणोदाहरणानि 'विश्वप्रमाता भवता जगन्ति व्याप्तानि मात्रापि न मुञ्चति त्वाम्' इति, 'एताः सन्नाभयो बाला यासां सन्नाभयः प्रियः' इति, 'यतस्ततः प्राप्तगुणः प्रभावे यतस्ततश्चेतसि भासतेऽयम्' इति, 'स्मरति स रतिकान्तस्ते ललामो ललामः' इत्यादीनि। अत्र विभक्तिविपरिणाममात्रे यमकत्वहानिः। प्रकृत्यर्थस्यापि भेदे यमकाद्भुतत्वमिति विवेकः।

इत्थं यमकं लक्षयित्वा अनुप्रासं लक्षयितुमाह— **शेष इति**। शेषशब्दार्थमाह— **पदमिति**। **स्थानानियतं** प्रागुक्तस्थाननियमरहितमित्यर्थः। एकार्थं पदम्, स्थानानियतमनेकार्थं च, तद्विधं तथाविधमस्थाननियममक्षरं शेषः। सरूपपदार्थमाह—**सरूप इति**। अन्येन अक्षरेन प्रयुक्तेन पदान्तरेण वा तुल्यरूपः शेषोऽनुप्रासो भवति। अत्र सूत्रे सरूपपदवैयर्थ्यमाशङ्कते— **नन्विति**। शेषोऽनुप्रास इत्येव कृते सूत्रे आवृत्तपदानुषङ्गादस्थाननियमं पदमक्षरं च आवृत्तमनुप्रासो भवतीति सूत्रार्थे संपन्ने सारूप्यमर्थात् संपत्स्यते; किं सरूपग्रहणेनेति शङ्कार्थः। अर्धाङ्गीकारेण परिहरति—**सत्यमिति**। अङ्गीकृतमंशमाह— **सिध्यत्येवेति**। सारूप्यमिति शेषः। तथाप्यावृत्तेरविशेषत्वेन सामान्येन यत् व्याप्तं कात्स्न्येनावृत्तत्वम्, तन्मात्रप्रसङ्गः स्यात्; विशेषस्तु न सिध्येदित्यर्थः। तमेव विशेषं दर्शयितुमाह— **विशेषार्थं चेति**। यद्यपि सामान्येन कात्स्न्येनावृत्तिर्भवति, तथापि कात्स्न्यैकदेशाभ्यां सारूप्यमत्र वक्तव्यमिति सरूपग्रहणं कृतमित्यर्थः।

**अनुल्बणो वर्णानुप्रासः श्रेयान् ॥ ९ ॥**

यो वर्णानुप्रासः, स खलु अनुल्बणः अपीनः श्रेयान् ।

उल्बणस्तु न श्रेयान् । यथा— 'वल्लीबद्धोर्ध्वजूटोद्भटमटति रटत्स्फोटिकोदण्डदण्डः' इति ।

**पादानुप्रासः पादयमकवत् ॥ १० ॥**

ये पादयमकस्य भेदाः, ते पादानुप्रासस्येत्यर्थः ।

तेषामुदाहरणानि यथा—

'कविराजमविज्ञाय कुतः काव्यक्रियादरः ।
कविराजं च विज्ञाय कुतः काव्यक्रियादरः ॥'

'आखण्डयन्ति मुहुरामलकीफलानि
बालानि बालकपिलोचनपिङ्गलानि ।'

'वस्त्रायन्ते नदीनां सितकुसुमधराः श्रीशसंकाश काशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस हंसाः ।

अनुप्रासो द्विविधः— उल्बणः अनुल्बणश्च । तत्रोल्बणादनुल्बण उत्कृष्ट इत्युपपादयितुमाह— **अनुल्बण इति** । व्याचष्टे— **यो वर्णानुप्रास इति** । अनुल्बणपदव्याख्यानम्— **अपीन इति** । मसृण इत्यर्थः । उदाहरणं तु 'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥' इत्यादि प्रसिद्धमिति मत्वा उल्बणमुदाहरति— **यथा वल्लीबद्धेति** ।

'पादानुप्रासः पादयमकवत्' इत्यत्रातिदेशप्राप्तमर्थमावेदयति— **ये पादयमकस्येति** । **कविराजमिति** । एकत्र आदरः, अन्यत्र दरः । 'दरत्रासौ भीतिर्भीः साध्वसं भयम्' इत्यमरः । उभयत्र आदर इति वा व्याख्येयम् । **आखण्डयन्तीति** । अत्र 'लानि' इत्यक्षरानुप्रासः । **वस्त्रायन्त इति** । हे श्रीशसंकाश, सितकुसुमधराः काशाः नदीनां वस्त्रायन्ते दुकूलवदाचरन्तीत्यर्थः ।

हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्र चन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपगतो विद्विषां काल कालः ॥'

'कुवलयदलश्यामा मेघा विहाय दिवं गताः
कुवलयदलश्यामो निद्रां विमुञ्चति केशवः ।
कुवलयदलश्यामा श्यामालताद्य विजृम्भते
कुवलयदलश्यामं चन्द्रो नभः प्रविगाहते ॥'

एवमन्येऽपि द्रष्टव्याः ।

इति काव्यालंकारसूत्रवृत्तौ आलंकारिके
चतुर्थेऽधिकरणे प्रथमोऽध्यायः ॥

---

हे श्रीनदीहंस श्री राज्यलक्ष्मीरेव नदी तत्र हंस, 'तासां नदीनां नवपुलिनगताः काशाभा हंसा भान्ति । हे मेदिनीचन्द्र, चन्द्रः हंसाभैरम्भोदैर्मुक्तः, अत एव स्फुरदमलरुचिर्भवति । हे विद्विषां काल, चन्द्राङ्कः शारदः कालः, ते जयकृदुपगत इति । अत्र समस्तपादान्तपदानुप्रासः । पादान्तपदानामुपरि पादादिषु पुनर्ग्रहणान्मुक्तपदग्रहाख्यमन्यदपि वैचित्र्यं द्रष्टव्यम् । **कुवलयदलेति** । अत्र सर्वपादादिपदानुप्रासः । **एवमन्येऽपीति** । 'सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः । पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ।' इत्यादयः प्रत्येतव्याः ॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति-
व्याख्यायां काव्यालंकारकामधेनौ आलंकारिके नाम
**चतुर्थेऽधिकरणे प्रथमोऽध्यायः ॥**



# द्वितीयोऽध्यायः ॥

संप्रत्यर्थालंकाराणां प्रस्तावः ; तन्मूलं चोपमेति सैव विचार्यते ।

**उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा ॥ १ ॥**

उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यत्, तत् उपमानम् । यदुपमीयते न्यूनगुणम्, तत् उपमेयम् । उपमानेनोपमेयस्य गुणलेशतः साम्यं यत्, असावुपमेति ।

ननु च उपमानमित्युपमेयमिति च संबन्धिशब्दावेतौ. तयोरेकतरोपादानेनैवान्यतरसिद्धिः । यथा 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्रोपमितग्रहणमेव कृतम्, नोपमानग्रहणमिति । तद्वदत्रोभयग्रहणं न कर्तव्यम् ; सत्यम् ; तत् कृतं लोकप्रसिद्धिपरिग्रहार्थम् । यदेवोपमेयमुप-

---

उत्खण्डिततमःस्तोममुपेयमुपरि श्रुतेः ।
उदर्चिरुपमामिन्दोरुक्तिज्योतिरुपास्महे ॥

शब्दालंकारेषु चर्चितेषु, खलेकपोतन्यायादखिलानामर्थालंकाराणामशेषेण प्राप्तौ, प्रकृतित्वात्तेषां प्रथममुपमां प्रस्तौति— **संप्रतीति** । व्याख्यातुं सूत्रमुपादत्ते---**उपमानेनेति**। उपमानोपमेयपदव्युत्पत्तिं प्रदर्शयति---**उपमीयत इति** । उत्कृष्टगुणेन येन चन्द्रादिना सादृश्यमानीयतेऽन्यन्मुखादिकम्, तदुपमानम् । यत्तु न्यूनगुणमुत्कृष्टगुणेनान्येनोपमीयते तदुपमेयम्, उपमानेन सादृश्यं प्रापयितुमर्हमित्यर्थ । **गुणलेशत इति** । गुणा उपमानोपमेययोरुत्कृष्टधर्माः, तेषां लेशत एकदेशतः, कचिदपि सर्वाकारसादृश्यासंभवादिति भावः । ननु संबन्धिशब्दयोरेकतरग्रहणेऽन्यतरस्यानुक्तसिद्धत्वमिति शङ्कते--- **ननु चेति** । अमुमर्थमभियुक्तोक्तिसंवादेन समर्थयते---**यथेति**। 'उपमितं व्याघ्रादिभिः' इति पाणिनीयसूत्रे यथोपमितपदग्रहणेनैव व्याघ्रादीनामुपमानत्वमवगम्यते, तद्वदत्राप्युपमानग्रहणं न कर्तव्यमिति शङ्कितुरभिप्रायः । परिहरति— **तत्कृतमिति** ।

मानं च लोकप्रसिद्धम्, तदेव परिगृह्यते नेतरत्। न हि यथा मुखं कमलमिव इति, तथा कुमुदमिव इत्यपि भवति ॥

## गुणबाहुल्यतश्च कल्पिता ॥ २ ॥

गुणानां बाहुल्यं गुणबाहुल्यम्, तत उपमानोपमेययोः साम्यात् कल्पितोपमा; कविभिः कल्पितत्वात् कल्पिता। पूर्वा तु लौकिकी। ननु कल्पितायां लोकप्रसिद्ध्यभावात् कथमुपमानोपमेयनियमः? गुणबाहुल्यस्योत्कर्षापकर्षकल्पनाभ्याम्।

तद्यथा—

'उद्गर्भहूणतरुणीरमणोपमर्द-
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥'

---

तत् उभयग्रहणं कृतम्। किमर्थम्? लोकप्रसिद्धस्योपमानस्य परिग्रहार्थम्। न ह्यत्र व्युत्पत्तिबलादागतमुपमानं विवक्षितम्, किंतु लोकप्रसिद्धमेवेत्यवगमयितुमुभयग्रहणं कृतमित्यर्थः। तत्प्रसिद्ध्यप्रसिद्धी दर्शयति— **यथेति**। यथा मुखं पद्ममिवेत्यत्र पद्मं मुखोपमानत्वेन प्रसिद्धम्, न तथा कुमुदमिवेत्यपि भवति प्रसिद्धमिति भावः।

लौकिकी कल्पिता चेत्युपमा द्विविधा; तत्र कल्पितोपमां प्रकटयितुमाह— **गुणबाहुल्यत इति**। उपमायाः कल्पितत्वव्यपदेशे कारणमाह— **कविभिरिति**। या पुनरुपमा गुणलेशतः साम्यलक्षणा सा लौकिकी प्रागुक्तैवेत्याह— **पूर्वा तु लौकिकीति**। प्रसिद्ध्यभावात् कल्पितायामिदमुपमानमिदमुपमेयमिति व्यवस्था न घटत इति शङ्कते— **नन्विति**। इह खलूपमानोपमेययोर्मुखचन्द्रयोर्गुणोत्कर्षापकर्षौ व्यवस्थापकौ। तत्तत्कल्पनया कल्पितायामुपमानोपमेयनियमो घटते। अतो न लोकविरोध इति परिहरति— **गुणबाहुल्यस्येति**। उदाहरति— **तद्यथेति**। उद्गर्भा व्यक्तगर्भा या हूणाख्यजनपदतरुणी तस्या रमणेन भर्त्रा उपमर्दो गाढालिङ्गनं तेन भुग्नः स चासावुन्नतः स्तनश्च भुग्नोन्नतस्तनः तस्य

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ।'

'अभिनवकुशसूचिस्पर्धि कर्णे शिरीषम् ।'

'इदानीं प्लक्षाणां जरठदलविश्लेषचतुर-
स्तिभीनामाबद्धस्फुरितशुकचञ्चूपुटनिभम् ।
ततः स्त्रीणां हन्त क्षममधरकान्तिं तुलयितुं
समन्तान्निर्याति स्फुटसुभगरागं किसलयम् ॥'

## तद्द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् ॥ ३ ॥

तस्या उपमाया द्वैविध्यम्, पदवाक्यार्थवृत्तिभेदात् । एका पदार्थवृत्तिः, अन्या वाक्यार्थवृत्तिरिति ।

पदार्थवृत्तिर्यथा—

'हरिततनुषु बभ्रुत्वग्विमुक्तासु यासां
कनककणसधर्मा मान्मथो रोमभेदः ।'

---

निवेशः संनिवेशो मण्डलाकार इति यावत् तन्निभम् । हिमांशोर्बिम्बम् । कठोरबिसकाण्डा इव कडारगौराः कपिशावदातास्तैः । अग्रकैः, प्रथममग्रे, विष्णोः पदमाकाशं व्यनक्ति । विषयव्याप्त्यर्थमुदाहरणान्तराण्याह— **सद्य इति** । मुण्डितेन वापितेन मत्तस्य हूणजनपदपुरुषस्य चिबुकेन प्रस्पर्द्धितुं शीलमस्यास्तीति तत्संनिभं भवति नारङ्गकमिति । **इदानीमिति** । जरठदलानां जीर्णपर्णानां विश्लेषेण चतुरा मनोज्ञाः स्तिभयोऽङ्कुरा येषाम् । 'स्तिभिश्च स्तिभितः शुङ्गोऽप्यङ्कुरोऽङ्कुर एव च' इति हलायुधः । तेषां प्लक्षाणां किसलयम् । आबद्धो घटितः स्फुरित ईषद्विवृतः शुकस्य यश्चञ्चूपुटस्तत्संनिभं भवति । ततोऽनन्तरम् । स्फुटसुभगरागं व्यक्तमनोज्ञारुण्यम्, स्त्रीणामधरकान्तिं तुलयितुं क्षमं योग्यं सत्, निर्याति ।

उपमाविभागमुदीरयितुमाह—**तद्द्वैविध्यमिति** । व्याचष्टे—**तस्या इति** । पदार्थवृत्तिमुपमां प्रतिपादयति— **पदार्थेति** । **हरिततनुष्विति** । कनककणस-

वाक्यार्थवृत्तिर्यथा—

'पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः॥'

## सा पूर्णा लुप्ता च॥ ४॥

सा उपमा पूर्णा लुप्ता च भवति।

## गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा॥ ५॥

गुणादिशब्दानां सामग्र्ये साकल्ये पूर्णा।

यथा— 'कमलमिव मुखं मनोज्ञमेतत्' इति।

## लोपे लुप्ता॥ ६॥

गुणादिशब्दानां लोपे वैकल्ये लुप्ता।

धर्मेत्यत्र पदार्थवृत्तिरुपमा। वाक्यार्थवृत्तिमुपमामुदाहरति— **पाण्ड्योऽयमिति**।

पुनर्भेदं प्रादुर्भावयितुमाह— **सा पूर्णा लुप्ता चेति**।

पूर्णां वर्णयितुमाह-- **गुणद्योतकेति**। व्याचष्टे— **गुणादीति**। उपमानोपमेयसमानधर्मसादृश्यप्रतिपादकानामन्यूनत्वेन प्रयोगे पूर्णा। **कमलमिवेति**। अत्र कमलमुपमानम्, मुखमुपमेयम्, इवशब्दः सादृश्यद्योतकः, मनोज्ञशब्दः समानधर्मवचनः; एतेषामन्यूनतया प्रयोगादियमुपमा पूर्णा।

लुप्तां लक्षयति-- **लोपे इति**। **गुणादिशब्दानामिति**। उपमानोपमेयगुणसादृश्यप्रतिपादकानां मध्ये एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। शशीव राजेत्यत्र साधारणधर्मस्याप्रयोगादेकस्य लोपः। दूर्वाश्यामेत्यत्रोदाहरणे सादृश्यद्योतकस्याप्रयोगादेकस्य लोपः। श्यामाशब्देनैव धर्मधर्मिणोरुक्तत्वात्। 'दूर्वा-

गुणशब्दलोपे यथा— 'शशीव राजा' इति ।

द्योतकशब्दलोपे यथा— 'दूर्वाश्यामेयम्' इति । उभयलोपे यथा— 'शशिमुखी' इति । उपमानोपमेयलोपस्तूपमाप्रपञ्चे द्रष्टव्यः ।

## स्तुतिनिन्दातत्त्वाख्यानेषु ॥ ७ ॥

स्तुतौ निन्दायां तत्त्वाख्याने चास्याः प्रयोगः ।

स्तुतिनिन्दयोर्यथा—

'स्निग्धं भवत्यमृतकल्पमहो कलत्रं
हालाहलं विषमिवापगुणं तदेव ।'

तत्त्वाख्याने यथा—

'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥'

## हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासंभवास्तद्दोषाः ॥ ८ ॥

तस्या उपमाया दोषा भवन्ति— हीनत्वम्, अधिकत्वम्, लिङ्गभेदः, वचनभेदः, असादृश्यम्, असंभव इति ।

---

मरकतश्यामं दुष्टराक्षसहारि यत् । अचलं लोचनाग्रान्मे मा चलत्वानश महः ॥ इत्युदाहरणान्तरमपि द्रष्टव्यम् । शशिमुखीत्यत्र सादृश्यधर्मवचनयोर्द्वयोर्लोपः । उपमानस्योपमेयस्य वा लोपः समासोक्त्यादावुदाहरिष्यत इत्याह— **उपमानेति** । समासोक्त्यादावुपमेयस्य, आक्षेपादावुपमानस्य लोप इति द्रष्टव्यम् ।

उपमामात्रस्य विषयं दर्शयितुमाह— **स्तुतीति** । स्निग्धमित्यादौ स्तुतिः । हालाहलमित्यादौ निन्दा । तां रोहिणीमित्यत्र तत्त्वाख्यानम् ।

उपमादोषानुद्घाटयितुमाह— **हीनत्वेति** । समासार्थं विविच्य दर्शयति— **तस्या इति** ।

तान् क्रमेण व्याख्यातुमाह—

**जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम् ॥ ९ ॥**

जात्या प्रमाणेन धर्मेण चोपमानस्य न्यूनता या, तत् हीनत्वमिति।

जातिन्यूनत्वरूपं हीनत्वं यथा—'चाण्डालैरिव युष्माभिः साहसं परमं कृतम्'

प्रमाणन्यूनत्वरूपं हीनत्वं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति'

उपमेयादुपमानस्य धर्मतो न्यूनत्वं यत्, तत् धर्मन्यूनत्वम्; तद्रूपं हीनत्वं यथा—

'स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥'

अत्र मौञ्जीप्रतिवस्तु तटिन्नास्त्युपमान इति हीनत्वम्। न च कृष्णाजिनपटमात्रस्योपमेयत्वं युक्तम्, मौञ्ज्या व्यर्थत्वप्रसङ्गात्। ननु

---

तत्र प्रथमोद्दिष्टं हीनत्वं प्रथयितुमाह— **जातीति**। व्याचष्टे— **जात्येति**। जातिर्ब्राह्मणत्वादिः। प्रमाणं परिमाणम्। धर्मः समानगुणः। एतेषामन्यतमेन 'न्यूनत्वमुपमानस्य हीनत्वम्। तत्राद्यमुदाहरति— **जातिन्यूनत्वरूपमिति**। चाण्डालैरित्यत्र साहसकारित्वं साधर्म्यम्। जातिन्यूनत्वं स्फुटम्। वह्निस्फुलिङ्ग इत्यत्र परिमाणन्यूनत्वमतिरोहितमेव। **स मुनिरिति**। नीलजीमूतेन कृष्णमेघेन भागे एकत्र प्रदेशे आश्लिष्टः। धर्मतो न्यूनत्वमुपमानस्य दर्शयति— **अत्रेति**। मौञ्ज्याः समानं वस्तु प्रतिवस्तु तटित्, सात्र नास्ति, उपमानविशेषणतया अनुपादानादित्यर्थः। ननु उपमाने यावद्दृष्टम्, तावदेव साधर्म्यमुपमेये विवक्षितम्। मौञ्जीलाञ्छनं तु स्वरूपकथनार्थमिति शङ्कां शकलयति— **न चेति**। नीलजीमूतस्य तटित्साहचर्यात् तद्ग्रहणेनैव तटित्संवित्तिरप्युपलभ्यते; ततो न काचिन्न्यूनतेति शङ्कते— **नन्विति**।

नीलजीमूतग्रहणेनैव तडित्प्रतिपाद्यते; तन्न; व्यभिचारात्।

अव्यभिचारे तु भवन्ती प्रतिपत्तिः केन वार्यते; तदाह—

**धर्मयोरेकनिर्देशेऽन्यस्य संवित्साहचर्यात् ॥ १० ॥**

धर्मयोरेकस्यापि धर्मस्य निर्देशेऽन्यस्य धर्मस्य संवित् प्रतिपत्ति-र्भवति। कुतः? साहचर्यात्। सहचरितत्वेन प्रसिद्धयोरवश्यमेकस्य निर्दे-शेऽन्यस्य प्रतिपत्तिर्भवति।

तद्यथा—

निर्वृष्टेऽपि बहिर्घने न विरमन्त्यन्तर्जरद्वेश्मनो
लूतातन्तुततिच्छिदो मधुपृषत्पिङ्गाः पयोबिन्दवः।
चूडाबर्बरके निपत्य कणिकाभावेन जाताः शिशो-
रङ्गास्फालनभग्ननिद्रगृहिणीचित्तव्यथादायिनः॥

अत्र मधुपृषतां वृत्तत्वपिङ्गत्वे सहचरिते; तत्र पिङ्गशब्देन पिङ्ग-त्वे प्रतिपन्ने वृत्तत्वप्रतीतिर्भवति। एतेन 'कनकफलकचतुरश्रं श्रोणि-

---

तटितमन्तरेणापि नीलजीमूतस्य सद्भावान्नैवमिति परिहरति— **तन्न व्यभिचा-रादिति।**

व्यभिचाराभावे तु सहचरितधर्मप्रतीतिरस्त्येवेति प्रदर्शयितुमनन्तरसूत्रम-वतारयति— **अव्यभिचारे त्विति।** व्याचष्टे— **धर्मयोरिति।** कार्यत्वानि-त्यत्ववदविनाभूतयोर्धर्मयोरेकस्य ग्रहणेन अशाब्दस्याप्यन्यस्य प्रतिपत्तिर्भवति, तयोरव्यभिचारादिति वाक्यार्थः। उदाहरति— **तद्यथेति। निर्वृष्ट इति।** बहिर्घने निर्वृष्टे निर्गतं वृष्टं वर्षणं यस्मात् तादृशि सत्यपि। जरद्वेश्मनः शिथि-लगृहस्य। लूतास्तन्तुजालकराः कृमयः। 'लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' इत्यमरः। तत्तन्तूनां ततीश्छिन्दन्तीति तथोक्ताः। मधुपृषत्पिङ्गाः मधु-बिन्दुपिङ्गलाः। पयोबिन्दवो न विरमन्ति। विरतेऽपि वर्षे वेश्मबिन्दवो न विर-मन्तीत्यर्थः। **अत्रेति।** मधुपृषतां वृत्तत्वपिङ्गत्वे सहचरिते अविनाभूते। तत्र पिङ्गशब्देनैव पिङ्गत्वप्रतिपत्तौ, अशाब्दस्यापि वृत्तत्वप्रतीतिर्भवति। उदाहरणान्त-

विम्बम्' इति व्याख्यातम्। अत्र कनकफलकस्य गौरत्वचतुरश्रत्वयोः साहचर्याच्चतुरश्रत्वश्रुत्यैव गौरत्वप्रतिपत्तिरिति।

ननु च यदि धर्मन्यूनत्वमुपमानस्य दोषः; कथमयं प्रयोगः—

'सूर्यांशुसंमीलितलोचनेषु
दीनेषु पद्मानिलनिर्मदेषु।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः
केका विनेशुः शिखिनां मुखेषु॥' इति?

अत्र बहुत्वमुपमेयधर्माणामुपमानात्; न; विशिष्टानामेव मुखाना-मुपमेयत्वात्, तादृशेष्वेव केकाविनाशस्य संभवात्।

**तेनाधिकत्वं व्याख्यातम्॥ ११॥**

तेन हीनत्वेन अधिकत्वं व्याख्यातम्— जातिप्रमाणधर्माधिक्यम-धिकत्वमिति।

---

रमाह- **कनकफलकेति**। उक्तं सूत्रार्थमुदाहरणे योजयति- **अत्रेति**। कनकफ-लकस्य चतुरश्रत्वश्रुत्या तत्सहचरितं गौरत्वमपि प्रतीयते, अव्यभिचारादित्यर्थः॥

धर्मन्यूनत्वस्योपमादोषत्वे प्रयोगविरोधमाशङ्कते— **ननु चेति**। प्रयोगं प्रदर्शयति— **सूर्येति**। मुखेष्वित्युपमेयस्य लोचनसंमीलनदैन्यनिर्मदत्वानां धर्मा-णां बाहुल्यं प्रतीयत इति विरोधः। परिहरति— **नेति**। भर्तृहीनजनाश्रयत्वेन गृ-हेष्वपि दैन्यमवगम्यते। तादृशेषु गृहेषु साध्वीनामिव दैन्यविशिष्टेषु शिखिमुखेषु केकानां विलयो वक्तव्यः, अन्यथा तदसंभवात्। दैन्यं च नेत्रनिमीलननिर्मद-त्वाभ्यां तदनुभावाभ्यामुपपादितमिति नास्ति धर्मन्यूनतेत्याह— **विशिष्टा-नामिति**। 'घर्मागमे दुर्मदतिग्मरश्मिसंतापसंमीलितलोचनेषु। साध्व्यः स्वगेहे-ष्विव भर्तृहीना केका विलीनाः शिखिनां मुखेषु॥' इति विधान्तरं विधातु न प्रबन्धकर्ता न प्रगल्भते; किंतु भर्तृहीनत्वस्य निर्मदत्वादेश्चोपपादकस्य भेदे-ऽप्युभयत्र दैन्यमेव साधर्म्यमिति विवक्षितमिति न कश्चिद्विरोधः।

अधिकत्वं व्याख्यातुं सूत्रं व्याहरति— **तेनेति**। हीनत्वमिवाधिकत्व-

जात्याधिक्यरूपमधिकत्वं यथा— विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजसः।

प्रमाणाधिक्यरूपं यथा—

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः॥'

धर्माधिक्यरूपं यथा—

'सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत।
सबाडवाग्निः सावर्तः स्रोतसामिव नायकः॥'

सबाडवाग्निरित्यस्य प्रतिवस्तुन उपमेयेऽभावाद्धर्माधिक्यमिति।

अनयोर्दोषयोर्विपर्ययाख्यस्य दोषस्यान्तर्भावान्न पृथगुपादानम्। अत एवास्माकं मते षट् दोषा इति।

## उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः॥ १२॥

उपमानस्योपमेयस्य च लिङ्गयोर्व्यत्यासो विपर्ययो लिङ्गभेदः।

---

मपि जात्यादिभिस्त्रिविधम्। तस्य क्रमेणोदाहरणानि दर्शयति-- **जात्येति**। विष्टयः कारवो भृत्या वा। 'विष्टिः कारौ कर्मकरे' इति वैजयन्ती। पातालमित्यादि स्पष्टम्। सबाडवाग्निः सावर्त इत्यत्राधिक्यमुपमाने दर्शयति-- **सबाडवेति**। अत्र सरश्मीति चक्रविशेषणवदावर्तविशेषणानुपादानान्न्यूनत्वमपि द्रष्टव्यम्। जातिप्रमाणहीनत्वाधिकत्वे पदार्थोपमायां दोषः. धर्मन्यूनत्वाधिकत्वे तु वाक्यार्थोपमायाम्। पदार्थोपमायां न धर्मन्यूनाधिकभावः संभवति, समानधर्मस्यैकत्वेन वाक्यार्थोपमायामिवानेकविशेषवैशिष्ट्यासंभवादिति द्रष्टव्यम्। **विपर्ययाख्यस्येति**। उपमेयधर्मस्य हीनत्वमधिकत्वं च विपर्ययः; तदात्मकस्य दोषस्य हीनत्वाधिकत्वानतिरेकात् तत्रैवान्तर्भाव इति तान्निरूपणेनैव निरूपितप्रायत्वान्न पृथगभिधानं कृतमित्यर्थः। **अस्माकमिति**। मत इति शेषः।

लिङ्गभेदमुल्लिङ्गयितुमाह— **उपमानोपमेययोरिति**। सूत्रार्थविवरणोदाहरणे सुगमे एव। 'गङ्गाप्रवाह इव तस्य निरर्गला वाक्' इत्यादिषु स्त्रीपुंसयोरपि द्रष्टव्यः।

यथा— 'सैन्यानि नद्य इव जग्मुरनर्गलानि ।'

## इष्टः पुंनपुंसकयोः प्रायेण ॥ १३ ॥

पुंनपुंसकयोरुपमानोपमेययोर्लिङ्गभेदः प्रायेण बाहुल्येन इष्टः ।

यथा— 'चन्द्रमिव मुखं पश्यति' इति । 'इन्दुरिव मुखं भाति' इत्येवंप्रायं तु नेच्छन्ति ।

## लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च ॥ १४ ॥

लौकिक्यामुपमायां समासाभिहितायामुपमायामुपमाप्रपञ्चे चेष्टो लिङ्गभेदः प्रायेणेति ।

लौकिक्यां यथा— 'छायेव स तस्याः' 'पुरुष इव स्त्री' इति ।

समासाभिहितायां यथा—'भुजलता नीलोत्पलसदृशी' इति ।

उपमाप्रपञ्चे यथा—

'शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥'

एवमन्यदपि प्रयोगजातं द्रष्टव्यम् ।

---

उक्तयुक्त्या पुंनपुंसकयोर्दोषत्वप्रसङ्गे लिङ्गभेदस्य कचिदपवादं दर्शयितुमाह—इष्ट इति । **एवंप्रायमिति** । एवंप्रायं तु नेच्छन्तीत्यात्मनस्तत्रौदासीन्यमवगमयति । यत्र हि लिङ्गभेदेऽपि विशेषणमुभयान्वयक्षमम्, तत्र न दोषः । यत्र तु विशेषणमेकत्रान्वितं सदितरत्र नान्वयक्षमम्, तत्र दोष इति तात्पर्यम् ।

लिङ्गान्तरेऽप्यपवादं दर्शयितुमाह— **लौकिक्यामिति** । लोकतः प्रसिद्धा उपमा लौकिकी । समासेनाभिहिता लुप्ता । उपमाप्रपञ्चः प्रतिवस्तुप्रभृतिः । तत्र लिङ्गभेदः प्रायेणेष्टः । उदाहरणानि दर्शयति— **लौकिक्यामिति** । उदाहरणानि स्पष्टार्थानि । शुद्धान्तदुर्लभमित्यत्र प्रतिवस्तूपमा । **एवमिति** । 'नेदं नभोमण्डलमम्बुराशिः' इत्याद्यपह्नुत्यादौ द्रष्टव्यम् ।

**तेन वचनभेदो व्याख्यातः ॥ १५ ॥**

तेन लिङ्गभेदेन वचनभेदो व्याख्यातः ।

यथा— 'पास्यामि लोचने तस्याः पुष्पं मधुलिहो यथा ।'

**अप्रतीतगुणसादृश्यमसादृश्यम् ॥ १६ ॥**

अप्रतीतैरेव गुणैर्यत् सादृश्यम्, तत् अप्रतीतगुणसादृश्यम् असादृश्यम् ।

यथा— 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।'

काव्यस्य शशिना सह यत् सादृश्यम्, तदप्रतीतैरेव गुणैरिति ।

ननु च अर्थानां रश्मितुल्यत्वे सति काव्यस्य शशितुल्यत्वं भविष्यति; नैवम्; काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वं सिध्यति; नाप्यर्थानां रश्मीनां च कश्चित्सादृश्यहेतुः प्रतीतो गुणोऽस्ति । तदेवमितरेतराश्रयदोषो दुरुत्तर इति ।

---

वचनभेदं विवेचयितुमाह— **तेनेति** । **पास्यामीति** । पास्याम इति वक्तव्ये पास्यामीति प्रयुक्तत्वाद्वचनभेदः ।

असादृश्यं प्रकाशयितुमाह— **अप्रतीतेति** । **अप्रतीतैः** सहृदयसंवादिप्रतिपत्त्यविषयैरित्यर्थः । **ग्रथ्नामीति** । काव्यशशिनोः सादृश्यमप्रतीतगुणमित्यसादृश्यम् । नन्वर्थानां रश्मिसादृश्यप्रतीत्या काव्यशशिनोरपि सादृश्यं संभवतीति शङ्कते— **नन्विति** । परस्पराश्रयपराहतमिदं चोद्यमिति परिहरति— **नैवमिति** । अर्थानां रश्मिसादृश्ये सिद्धे शशिसादृश्यं काव्यस्य सिध्यति; सिद्धे च काव्यस्य शशिसादृश्येऽर्थानां रश्मिसादृश्यमिति परस्पराश्रय इत्यर्थः । ननु काव्यशशिसादृश्यनिरपेक्षमेव अर्थरश्मिसादृश्यं संभवति; कुतः परस्पराश्रयप्रसङ्ग इत्यत आह— **नाप्यर्थानामिति** । **दुरुत्तरः** दुष्परिहरः ।

**असादृश्यहता ह्युपमा तन्निष्ठाश्च कवयः ॥ १७ ॥**

असादृश्येन हता असादृश्यहता उपमा। तन्निष्ठा उपमानिष्ठाश्च कवय इति।

**उपमानाधिक्यात्तदपोह इत्येके ॥ १८ ॥**

उपमानानामाधिक्यात् तस्य असादृश्यस्य अपोह इत्येके मन्यन्ते। यथा— 'कर्पूरहारहरहाससितं यशस्ते।' इति। अत्र कर्पूरादिभिरुपमानैर्बहुभिः सादृश्यं यशसः सुस्थापितं भवति, तेषां शुक्लगुणातिरेकात्।

**नापुष्टार्थत्वात् ॥ १९ ॥**

उपमानाधिक्यादपोह इति यदुक्तम्, तन्न; अपुष्टार्थत्वात् एकस्मि-

---

सादृश्यैकसारायामुपमायां परां काष्ठामातिष्ठमानैः कविभिरसादृश्यमवश्यमपोहनीयमिति शिक्षयितुं सूत्रमुपक्षिपति— **असादृश्येति**। उपमानिष्ठाः उपमापरायणा इत्यर्थः।

परपक्षं प्रतिक्षेप्तुं पूर्वपक्षसूत्रमुपक्षिपति— **उपमानेति**। **तदपोहः** तस्य असादृश्यस्य अपोहः परिहारः। उदाहरति— **कर्पूरेति**। श्वेतिमातिशयविशिष्टतया वर्णनीये यशसि सितिमगुणाप्रतीतौ वैसादृश्यशङ्कायां सितिमगुणातिशयविशिष्टैर्बहुभिरुपमानैः सादृश्यदृढीकरणे उपमेये शौक्ल्यगुणातिरेकावगमात् वैसादृश्यमपोह्यत• इत्यभिसंधाय व्याचष्टे— **अत्रेति**। अत्र हेतुमाह— **तेषामिति**।

• बाहुल्येऽप्युपमानानामर्थप्रकर्षाधायकत्वाभावान्नायं पक्षो युज्यत इति दूषयितुं सूत्रमनुभाषते— **नापुष्टार्थत्वादिति**। परपक्षमनूद्य प्रतिक्षिपति— **उपमानेति**। अत्र हेतुमुपन्यस्यति — **अपुष्टार्थत्वादिति**। हेतुं विवृणोति— **एकस्मिन्निति**। एकेनैवोपमानेन सितिमगुणावगमे सिद्धे पुनः सहस्रमप्युपमानानि यशसि सितिम्नः परं प्रकर्षमाधातुं न पारयन्तीत्यर्थः। ननु कर्पूरादयः शब्दा यशसि सितिमानं प्रतिपादयन्तः, सहृदयचर्वणीयत्वं परिष्कारत्वं व्यापकत्वं च गुणान्तरमवगमयन्ति; अतोऽस्त्येवार्थपरिपोष इति चेत्, मैवम्; कर्पू-

न्नुपमाने प्रयुक्ते उपमानान्तरप्रयोगो न कंचिदर्थविशेषं पुष्णाति । एतेन 'बलसिन्धुः सिन्धुरिव क्षुभितः' इति प्रत्युक्तम् । ननु सिन्धुशब्दस्य द्विःप्रयोगात्पौनरुक्त्यम्; न; अर्थविशेषात्; बलं सिन्धुरिव वैपुल्यात् बलसिन्धुः सिन्धुरिव क्षुभित इति क्षोभसारूप्यात् । तस्मादर्थभेदान्न पौनरुक्त्यम् । अर्थपुष्टिस्तु नास्ति । सिन्धुरिव क्षुभित इत्यनेनैव वैपुल्यं प्रतिपत्स्यते । उक्तं हि—'धर्मयोरेकनिर्देशेऽन्यस्य संवित्साहचर्यात्' इति ।

**अनुपपत्तिरसंभवः ॥ २० ॥**

अनुपपत्तिः अनुपपन्नत्वम् उपमानस्य असंभवः ।

यथा—

'चकास्ति वदनस्यान्तः स्मितच्छाया विकासिनः ।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥'

रादयः शब्दाः सितपदसमभिव्याहारेण सितिमनि शृङ्खलितशक्तयो न किमपि गुणान्तरमुदीरयितुमुत्सहन्ते । यदि कनकफलचतुरश्रत्वं तद्गौरत्वमिव कर्पूरादिपदैः सितिमगुणोऽवगम्यमानः स्वसहचरितमपि चर्वणीयत्व परिष्कारत्वं व्यापनशीलत्वं च गुणान्तरमवगमयेत्, तदा भवतु पुष्टार्थत्वम् । उक्तं दूषणमन्यत्राप्यतिदिशति— **तेनेति** । नन्वसत्यर्थभेदे सिन्धुशब्दस्य द्विरुक्तौ पौनरुक्त्यमिति वक्तव्यमिति शङ्कामनुभाषते— **नन्विति** । दूषयति— **नेति** । हेतुमाह— **अर्थेति** । अर्थभेदादित्यर्थः । अर्थभेदमेव समर्थयते— **बलं सिन्धुरिवेति** । बलसिन्धुरित्यत्र वैपुल्यं प्रतिपाद्यम् । अन्यत्र तु क्षोभसारूप्यमिति भेदः । निगमयति— **तस्मादिति** । अपुष्टार्थत्वं स्पष्टयति— **अर्थपुष्टिस्त्विति** । सिन्धुक्षोभोऽत्र गम्यमानः स्वसहचरितं वैपुल्यमप्यवग[म]यतीत्यत्र सूत्रं संवादयति— **उक्तं हीति** । 'इह राजति राजेन्दुरिन्दुः क्षीरनिधाविव' इत्यत्र द्वयोरिन्दुशब्दयोः श्रेष्ठचन्द्रवाचकत्वेनैकार्थ्याभावान्न अपुष्टार्थत्वमित्यवगन्तव्यम् ।

असंभवं व्याख्यातुमाह— **अनुपपत्तिरिति** । **अनुपपन्नत्वमिति** । उपपत्तिशून्यत्वमनुपपत्तिरित्यर्थः । उदाहरति— **चकास्तीति** । विकासिनो वदनस्या-

चन्द्रिकायामुन्निद्रत्वमरविन्दस्येत्यनुपपत्तिः । नन्वर्थविरोधोऽयमस्तु; किमुपमादोषकल्पनया? न; उपमायाम् अतिशयस्येष्टत्वात्।

कथं तर्हि दोष इत्यत आह—

**न विरुद्धोऽतिशयः ॥ २१ ॥**

विरुद्धस्य अतिशयस्य संग्रहो न कर्तव्य इति अस्य सूत्रस्य तात्पर्यार्थः।

तानेतान् षडुपमादोषान् ज्ञात्वा कविः परित्यजेत्।

इति काव्यालंकारसूत्रवृत्तौ आलंकारिके

चतुर्थेऽधिकरणे द्वितीयोऽध्यायः ॥

न्तर्मध्ये स्मितच्छाया उन्निद्रस्यारविन्दस्य मध्ये मुग्धा मनोज्ञा चन्द्रिकेव चकास्ति'। अत्रासंभवमवगमयति— **चन्द्रिकायामिति** । असंभवस्यार्थदोषत्वमपाकर्तुमनुभाषते—**नन्विति** । उन्निद्रारविन्दतन्मध्यवर्तिचन्द्रिकार्थयोर्विरोधित्वादयमसंभवोऽर्थदोषोऽस्तु; नोपमादोषत्वं कल्पनीयमित्यर्थः। परिहरति—**नेति** । विकासिनो मुखस्य स्मितविकासे वर्णनीये तदुपमानभूतया उन्निद्रारविन्दसंबन्धिन्या चन्द्रिकया सादृश्ये सति कस्यचिदतिशयस्याभिमतत्वादित्यर्थः।

**कथं तर्हीति** । इष्टश्चेदयमतिशयः, तर्हि गुण एवायम्; न तु दोष इत्यर्थः। परिहरति—**नेति** । अतिशयो विरुद्ध इति यतः, अतो दोष एवेत्यर्थः। निर्वृत्तमर्थं सूत्रस्य निगमयति—**विरुद्धस्येति**। प्रदर्शितानामेषामुपमादोषाणां परित्याग एव फलमित्याह— **तानेतानिति** ।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्तिव्याख्यायां काव्यालंकारकामधेनौ आलंकारिके

**चतुर्थेऽधिकरणे द्वितीयोऽध्यायः ॥**

# तृतीयोऽध्यायः ॥

---*---

संप्रत्युपमाप्रपञ्चो विचार्यते । कः पुनरसावित्याह—

**प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः ॥ १ ॥**

प्रतिवस्तु प्रभृतिर्यस्य स प्रतिवस्तुप्रभृतिः । उपमायाः प्रपञ्चः उपमाप्रपञ्च इति ।

---

सुधारसाभे सुषमाप्रवाहे मुक्तायमानैर्मणिभिर्विचित्रैः ।
ज्योत्स्नेव ताराभिरलंकृता मे सा शारदा चेतसि संनिधत्ताम् ॥

मूलं वस्तु निगुम्भनोदितकनद्वाक्यानि शाखाः परं
दीव्यद्वाचकसंहतिर्दलगणो राजद्गुणाः पल्लवाः ।
अर्थाः पुष्पकदम्बकं सुरुचिरा भूषाः फलं रीतयो
जीवो यस्य विभाति सोऽयमतुलो वाग्दिव्यशाखी चिरम् ॥

सर्वालंकारप्रकृतिभूतामुपमामुपपाद्य तत्प्रपञ्चं प्रपञ्चयितुम् आरभते— **संप्रतीति** । अनुयोगपूर्वकमनन्तरसूत्रमवतारयति— **कः पुनरिति** । व्याचष्टे— **प्रतिवस्त्विति** । प्रभृतिशब्द आद्यर्थः । प्रतिवस्तुप्रमुखाणाम् अलंकाराणामुपमागर्भत्वादुपमाप्रपञ्च इति व्यपदेशः कृतः । "प्रतिवस्तुप्रभृतय उद्दिश्यन्ते यथाक्रमम् । प्रतिवस्तु समासोक्तिरथाप्रस्तुतशंसनम् ॥ अपह्नुती रूपकं च श्लेषो वक्रोक्त्यलंकृतिः । उत्प्रेक्षातिशयोक्तिश्च संदेहः सविरोधकः ॥ विभावनानन्वयः स्यादुपमेयोपमा ततः । परिवृत्तिः क्रमः पश्चाद्दीपकं च निदर्शना ॥ अर्थान्तरस्य न्यसनं व्यतिरेकस्ततः परम् । विशेषोऽथ व्याजस्तुतिर्व्याजोक्त्यलंकृतिः ॥ स्यात्तुल्ययोगिताक्षेपः सहोक्तिश्च समासतः । अथ संसृष्टिभेदौ द्वावुपमारूपकं तथा ॥ उत्प्रेक्षावयवश्चेति विज्ञेयोऽलंकृतिक्रमः ॥"

ननु प्रतिवस्तुनो वाक्यार्थरूपत्वेन वाक्यार्थोपमानिरूपणेनैव गतार्थत्वमिति न लक्षणान्तरापेक्षेति शङ्कां शकलयन् लक्षणभेदं दर्शयितुमाह— **वाक्या-**

वाक्यार्थोपमायाः प्रतिवस्तुनो भेदं दर्शयितुमाह—

**उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु ॥ २ ॥**

समानं वस्तु वाक्यार्थः, तस्य न्यासः समानवस्तुन्यासः; उपमेयस्य अर्थाद्वाक्यार्थस्योक्तौ सत्यामिति । अत्र द्वौ वाक्यार्थौ; एको वाक्यार्थोपमायामिति भेदः ।

तद्यथा—

'देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

प्रतिवस्तुनः समासोक्तेर्भेदं दर्शयितुमाह—

**अनुक्तौ समासोक्तिः ॥ ३ ॥**

उपमेयस्य अनुक्तौ समानवस्तुन्यासः समासोक्तिः । संक्षेपवचनात् समासोक्तिरित्याख्या ।

यथा—

'श्लाघ्या ध्वस्ताध्वगग्लानेः करीरस्य मरौ स्थितिः ।
धिङ्मेरौ कल्पवृक्षाणामव्युत्पन्नार्थिनां श्रियः ॥'

---

र्थेति । सूत्रार्थं विवृणोति— **समानं वस्त्विति** । किमिदं समानं वस्तु पदार्थरूपम्, उत वाक्यार्थरूपमिति विशयो मा भूदित्याह— **वाक्यार्थ इति** । समानवस्तुन उपमानस्य वाक्यार्थत्वाभ्युपगमबलादुपमेयस्यापि वाक्यार्थत्वसिद्धिरित्याह— **उपमेयस्येति** । उपमेयस्य वाक्येन प्रतिपादने उपमानस्यापि वाक्यान्तरेण प्रतिपादनं प्रतिवस्त्विति लक्षणार्थः; अत एव वाक्यार्थोपमायाः प्रतिवस्तुनो भेद इत्याह— **अत्रेति** । **देवीभावमिति** । अत्र पूर्वोत्तरवाक्याभ्यां वस्तुप्रतिवस्तुनोः प्रतिपादनात् प्रतिवस्त्वलंकारः ।

समासोक्तिं वक्तुमाह— **प्रतिवस्तुन इति** । लक्षणवाक्यार्थं विवृणोति— **उपमेयस्येति** । समानवस्तुन उपमानस्य न्यासः वाक्येनोपपादनमित्यर्थः । समासोक्तिरिति संज्ञान्वर्थेत्याह— **संक्षेपेति** । उदाहरति— **श्लाघ्येति** । करीरो

समासोक्तेरप्रस्तुतप्रशंसायाः भेदं दर्शयितुमाह—

## किंचिदुक्तावप्रस्तुतप्रशंसा ॥ ४ ॥

उपमेयस्य किंचित् लिङ्गमात्रेण उक्तौ समानवस्तुन्यासः अप्रस्तुतप्रशंसा ।

यथा—

'लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

'यत्रोत्पलानि शशिना सह' इति, 'द्विरदकुम्भतटी च यत्र' इति, 'यत्रापरे' इति च अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसा ।

अपह्नुतिरपि ततो भिन्नेति दर्शयितुमाह—

## समेन वस्तुनान्यापलापोऽपह्नुतिः ॥ ५ ॥

समेन तुल्येन वस्तुना वाक्यार्थेन अन्यस्य वाक्यार्थस्य अपलापो निह्नवो यः तत्त्वाध्यारोपणाय, असावपह्नुतिः ।

वंशो बर्बूरो वा 'करीरोऽस्त्री दन्तिदन्तमूले चक्रकरे घटे । सल्लक्यामपि बर्बूरे काचे वंशे तदङ्कुरे ॥' इत्यमरशेषः । अव्युत्पन्नार्थिनाम् अर्थिपदार्थव्युत्पत्तिरहितानाम् । अत्र करीरस्य मरुस्थितिश्लाघनेन कल्पवृक्षाणां मेरुस्थितिनिन्दनेन च तदुपमेययोः परोपकारप्रवणतद्विमुखयोः श्लाघानिन्दे समस्योक्ते इति समासोक्तिः ।

अप्रस्तुतप्रशंसां प्रस्तोतुमाह— **किंचिदिति** । लिङ्गमात्रेणोक्तौ एकदेशेनोपादाने । **लावण्येति** । अत्र लावण्यपदार्थैकदेशेनोपमेयानां नयनादीनामुक्तावुत्पलादीनामप्रस्तुतानां प्रशंसनादप्रस्तुतप्रशंसा नामालंकारः ।

अपह्नुतिमवगमयितुमाह— **अपह्नुतिरिति** । ततः प्रतिवस्तुनामालङ्कारात्, भिन्नेत्यर्थः । **समेनेति** । वाक्यार्थभूतेनोपमानेनान्यस्य वाक्यार्थभूतस्योप-

यथा—

'न केतकीनां विलसन्ति सूचयः
प्रवासिनो हन्त हसत्ययं विधिः।
तडिल्लतेयं न चकास्ति चञ्चला
पुरः स्मरज्योतिरिदं विवर्तते ॥'

वाक्यार्थयोस्तात्पर्यात् ताद्रूप्यमिति न रूपकम्।

तत्तु कीदृशमित्याह—

## उपमानेनोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम् ॥ ६ ॥

उपमानेन उपमेयस्य गुणसाम्यात् तत्त्वस्य अभेदस्य आरोपणमारोपो रूपकम्। उपमानोपमेययोरुभयोरपि ग्रहणं लौकिक्याः कल्पितायाश्चोपमायाः प्रकृतित्वमत्र यथा विज्ञायेतेति।

यथा—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।

---

मेयस्यापलापः अतस्मिंस्तत्त्वाध्यारोपेण अपह्नुतिरिति लक्षणार्थः। **न केतकीनामिति**। सूचयः कुड्मलाः। 'केतकीमुकुले सूचिः सेविन्यां पिशुने तु ना।' इति हलायुधः। केतकीसूचिविलासतडिल्लताविलासयोरुपमेययोरुपमानभूतविधिहासस्मरज्योतिर्विवर्तनाध्यारोपेण तयोरपलापादपह्नुतिः। आरोपरूपत्वाविशेषात् कथमपह्नुते रूपकाद्भेद इत्याशङ्क्य भेदं दर्शयति— **वाक्यार्थयोरिति**। अपह्नुतौ वाक्यार्थयोरार्थिकं ताद्रूप्यम्, रूपके तु पदार्थयोः शाब्दं ताद्रूप्यमिति भेदः।

रूपकं निरूपयितुमाह—**तत्तु कीदृशमिति**। व्याचष्टे—**उपमानेनेति**। लौकिककल्पितोपमाप्रकृतिकत्वं रूपकस्य निरूपयितुमुपमानोपमेययोर्ग्रहणं कृतमित्याह— **उपमानेति**। उदाहरति— **इयं गेहे लक्ष्मीरिति**। अत्र इयमिति सर्वनाम्ना सीतां निर्दिश्य तत्र लक्ष्मीत्वममृतवर्तित्वम्, अस्याः स्पर्शे चन्दनरस-

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥'

मुखचन्द्रादीनां तूपमासमासात् न रूपकत्वं युक्तमिति।

रूपकाच्छ्लेषस्य भेदं दर्शयितुमाह—

**स धर्मेषु तन्त्रप्रयोगे श्लेषः ॥ ७ ॥**

उपमानेनोपमेयस्य धर्मेषु गुणक्रियाशब्दरूपेषु स तत्त्वाध्यारोपः तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति श्लेषः।

यथा—

'आकृष्टामलमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः
सोष्माणो व्रणिनो विपक्षहृदयप्रोन्माथिनः कर्कशाः।

---

त्वम्, बाहौ मौक्तिकसरत्वं चाध्यारोप्यत इति रूपकम्। इत्थमुपमानोपमेययोर्व्यासेन प्रयोगे रूपकमुदाहृत्य समासेन प्रयोगे तूपमैव न रूपकमित्याह— **मुखेति**। मुखचन्द्रादीनां पुरुषव्याघ्रादिसादृश्यादुपमात्वमेव, न रूपकत्वं संभवति, तत्त्वाध्यारोपासंभवादिति भावः। इदमत्रानुसंधेयम्— येषां व्याघ्रादिषु पाठोऽस्ति तेषामुपमैव। ये त्विन्दुप्रभृतयस्तत्र न पठ्यन्ते, ते च व्याघ्रादेराकृतिगणत्वात् तत्र द्रष्टव्याः। तथापि मतान्तरानुरोधेन मुखचन्द्रादिषु क्वचिदुपमा, क्वचिद्रूपकमिति द्वैरूप्यं संभवति। तथाच यत्र 'ज्योत्स्नेव भाति द्युतिराननेन्दोः' इत्यादावुपमायां साधकं प्रामाणमस्ति, तत्र व्याघ्रादिसमासः। यत्र 'मोहमहाचलदलने भक्तिः कुलिशाग्रकोटिरेव नृणाम्' इत्यादौ रूपके साधकं प्रमाणमस्ति, तत्र मयूरव्यंसकादिसमासः; 'अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः' इति वचनात्।

श्लेषं लक्षयितुमाह— **स धर्मेष्विति**। सूत्रार्थं विवृणोति— **उपमानेनेति**। धर्माणां धर्मिसापेक्षत्वाद्धर्मिणमनुषज्य दर्शयति— **उपमानेनोपमेयस्येति**। गुणसाम्यत इति शेषः। धर्मस्वरूपमाह— **गुणेति**। तच्छब्दपरामृश्यं दर्शयति— **तत्त्वाध्यारोप इति**। अनेकोपकारकारि सकृदुच्चारणं तन्त्रम्। उपमानोपमेययोर्गुणसाम्ये तद्धर्मेषु गुणादिषु तन्त्रेण प्रयोगे सति यत्ताद्रूप्यारोपणम्, स श्लेष

उद्वृत्ता गुरवश्च यस्य वशिनः श्यामायमानानना
योधा मारवधूस्तनाश्च न ददुः क्षोभं स वोऽव्याज्जिनः ॥'

यथा च गौणस्यार्थस्यालंकारत्वम्, तथा लाक्षणिकस्यापीति दर्शयितुमाह—

**साद्दश्याल्लक्षणा वक्रोक्तिः ॥ ८ ॥**

बहूनि हि निबन्धनानि लक्षणायाम्; तत्र साद्दश्याल्लक्षणा वक्रोक्तिरिति।

यथा—'उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात्।'

इति लक्षणार्थः। **आकृष्टेति।** आकृष्टे कोशादुद्धृते मण्डलाग्रे खड्गे रुचिः प्रीतिर्येषाम्। आकृष्टा आहृता स्वीकृतेति यावत्, मण्डलस्य बिम्बस्य अग्रे उपरिभागे रुचिः कान्तिर्यैः। संनद्धं कवचितं परिणद्धं च वक्षःस्थलं येषाम्। ऊष्मणा दर्पेण उष्णगुणेन च सह वर्तन्त इति सोष्माणः। व्रणाः शस्त्रक्षतानि नखक्षतानि च एषां सन्तीति व्रणिनः। विपक्षाणां शत्रूणां सपत्नीनां च हृदयं वक्षश्चेतश्च प्रकर्षेण उन्मथ्नन्तीति तथोक्ताः। कर्कशाः क्रूराः कठिनाश्च। उद्वृत्ताः उद्धता उन्नताश्च। गुरवो महान्तः स्थूलाश्च। श्यामायमानानि अङ्कुरितश्मश्रुतया कचासङ्गेन वा, स्वभावेन च श्यामलायमानानि आननानि मुखानि चूचुकानि च येषां ते तथोक्ताः। वशिनो यस्येति संबन्धः। अत्र यथासंभवं गुणक्रिया द्रष्टव्याः। यद्यपि समुच्चयोऽत्र स्फुरति, तथापि साधारणविशेषणमहिम्ना आरोपः प्रतिपाद्यत इति श्लेषः।

वक्रोक्तिं वक्तुं संगतिमुल्लिङ्गयति-- **यथा चेति।** यथा मुखचन्द्रादौ गुणयोगादागतस्य गौणार्थस्य रूपकाद्यलंकारता, तथा लक्षणातः प्रतिपन्नस्य लाक्षणिकार्थस्य वक्रोक्त्यलंकारता भवतीति लक्षणार्थः। **बहूनीति।** 'अभिधेयेन संबन्धात्साद्दश्यात्समवायतः। वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता' इति लक्षणाया निमित्तानि द्रष्टव्यानि। द्विरेफशब्दस्याभिधेयो भ्रमरशब्द इति तेन स्वाभिधेयसंबन्धात् भृङ्गरूपार्थो लक्ष्यते। सिंहो माणवकः, गङ्गायां घोषः, बृहस्पतिरयं मूर्खः, महति समरे शत्रुघ्नस्त्वम्, इति यथाक्रममुदाहरणानि द्रष्टव्यानि। **उन्मिमीलेति।** कमलं विचकास कैरवं संचु-

अत्र नेत्रधर्मावुन्मीलननिमीलने सादृश्याद्विकाससंकोचौ लक्षयतः ।

'इह च निरन्तरनवमुकुलपुलकिता हरति माधवी हृदयम् ।
मदयति च केसराणां परिणतमधुगन्धि निःश्वसितम् ॥'

अत्र च निःश्वसितमिति परिमलनिर्गमं लक्षयति ।

'संस्थानेन स्फुरतु सुभगः स्वार्चिषा चुम्बतु द्याम् ।'

'आलस्यमालिङ्गति गात्रमस्याः ॥'

'परिम्लानच्छायामनुवदति दृष्टिः कमलिनीम् ।'

'प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।'

'ऊरुद्वन्द्वं तरुणकदलीकाण्डसब्रह्मचारि ।'

इत्येवमादिषु लक्षणार्थो निरूप्यत इति लक्षणाया झटित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षत इति ।

असादृश्यनिबन्धना तु लक्षणा न वक्रोक्तिः ।

यथा— 'जरठकमलकन्दच्छेदगौरैर्मयूखैः ।'

कोचेति ऋजुवृत्त्या वक्तव्ये तत्सादृश्यादुन्मिमील निमिमीलेति नेत्रक्रियाध्यवसायवक्रिम्णोक्तिरिति वक्रोक्तिः । लक्ष्यलक्षणयोर्मैत्रीमासूत्रयति— **अत्र नेत्रेति** । अतस्मिंस्तत्त्वाध्यारोपो रूपकम् । विषयनिगरणेन साध्यवसानलक्षणायां वक्रोक्तिरिति विवेकः । उदाहरणान्तराण्युपदर्शयति—**इह चेति** । वक्रोक्तिं दर्शयति—**अत्र चेति** । मुकुलपुलकितेत्यत्र पुलकितत्वं माधव्या मुकुलैरावृतत्वं लक्षयतीत्यपि द्रष्टव्यम् । चुम्बतु द्यामिति चुम्बनं द्योसम्बन्धम्, गात्रमालिङ्गतीति आलिङ्गनम् आलस्यवैशिष्ट्यं गात्रस्य, अनुवदतीत्यत्रानुवादः कमलिनीसादृश्यम्, मैत्री च आमोदसंक्रान्तिम्, सब्रह्मचारीति कदलीकाण्डसमानतां च लक्षयतीत्येवमादिषु प्रयोगेषु लक्षणार्थो निरूप्यते । **लक्षणाया इति** । यत्र सादृश्यलक्षणा सहृदयहृदयेष्वविलम्बेन लक्ष्यार्थप्रतिपत्तिमुद्भावयितुं प्रगल्भते, तत्र वक्रोक्तिरलंकार इति रहस्यमिति लक्षणाविद आचक्षत इत्यर्थः । सादृश्यपदव्यावर्त्यं कीर्तयति—**असादृश्येति** । संबन्धान्तरनिबन्धना तु लक्षणा वक्रोक्तिर्न भवतीत्यर्थः । तदेव दर्शयति—**यथा जरठेति** । सामीप्यमत्र धर्मधर्मिभावसंबन्धः ।

अत्र च्छेदः सामीप्याद्द्रव्यं लक्षयति, तस्यैव गौरत्वोपपत्तेः ।

रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया भेदं दर्शयितुमाह—

**अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा ॥ ९ ॥**

अतद्रूपस्य अतत्स्वभावस्य, अन्यथा तत्स्वभावतया, अध्यवसानम् अध्यवसायः; न पुनरध्यारोपो लक्षणा वा । अतिशयार्थमिति भ्रान्तिज्ञाननिवृत्त्यर्थम् । सादृश्यादियमुत्प्रेक्षेति । एनां चेवादिशब्दा द्योतयन्ति ।

यथा—

'स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः ।

---

स्वरूपान्यथाभावकल्पनास्वभावत्वाविशेषेण रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया अभेदशङ्कायां लक्षणतो भेदं दर्शयितुमनन्तरसूत्रमवतारयति—**रूपकेति** । सूत्रार्थमाविष्करोति— **अतद्रूपस्येति** । अतद्रूपं प्राकरणिकं वस्तु तदात्मना अप्राकरणिकवस्तुरूपत्वेन अतिशयमाधातुमध्यवसीयते प्रतिभामात्रेण कविना संभाव्यते, न पुनरिन्द्रियदोषेण, तथाविधं संभावनापरपर्यायमध्यवसानमुत्प्रेक्षेति लक्षणार्थः । **न पुनरिति** । अतत्स्वभावस्य वस्तुनस्तद्गुणयोगात्तद्भावकल्पनमध्यारोपः; यत्र रूपकादिस्वरूपलाभः । यत्तु सादृश्ये सत्येकेन वस्तुना वस्त्वन्तरस्य प्रतिपादनमध्यवसायरूपं सा सादृश्यमूला लक्षणा; यत्र वक्रोक्तिव्यपदेशः । यत्पुनरतद्रूपे वस्तुन्यतिशयमाधातुं तद्रूपतयाध्यवसानम्, सोऽयमध्यवसायः संभावनालक्षण उत्प्रेक्षेति विवेकः । अतो न रूपकम्, नापि वक्रोक्तिरिति ततो भेदो दर्शितः । **अतिशयार्थमिति** । भ्रान्ति विपर्ययज्ञानम् । अन्यथाध्यवसायत्वाविशेषेऽपि बुद्धिपूर्वकत्वादुत्प्रेक्षायास्तद्विलक्षणाया भ्रान्तेर्व्यावृत्तिरित्यतिशयः । उत्प्रेक्षोदाहरणेषु केषुचिदिवशब्दश्रवणात् कस्यचिदुपमाशङ्का जायते; तामाशङ्क्य परिहरति— **सादृश्यादियमुत्प्रेक्षेति** । प्रयुक्तोऽपि क्वचिदिवशब्दः सादृश्यनिबन्धनत्वसूचनद्वारेणोत्प्रेक्षामपि द्योतयतीत्यर्थः । तदुक्तं दण्डिना, 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इति । **स वः पायादिति**। अत्र नवबिसलताकोटिकुटिल इति विशेषणसामर्थ्या-

स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥'

उत्प्रेक्षैवातिशयोक्तिरिति केचित्; तन्निरासार्थमाह—

**संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिः॥ १० ॥**

संभाव्यस्य धर्मस्य तदुत्कर्षस्य च कल्पना अतिशयोक्तिः।

यथा—

'उभौ यदि व्योम्नि पृथक्पतेतामाकाशगङ्गापयसः प्रवाहौ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥'

यथा वा—

'मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥'

---

दिन्दुपदेनेन्दुकलावगम्यते। इन्दुर्मन्दाकिनीसलिलसेकेन कपालादुद्भिन्नोऽङ्कुर इवेत्युत्प्रेक्ष्यत इत्युत्प्रेक्षालंकार.।

संभावनारूपत्वाविशेषादुत्प्रेक्षातिशयोक्त्योरभेदं केचिन्मन्यन्ते; तन्मतं निरसितुं लक्षणभेदं दर्शयतीत्याह-- **उत्प्रेक्षैवेति**। **संभाव्यस्येति**। संभाव्यस्य उत्प्रेक्ष्यस्य धर्मस्य यद्यर्थानुबन्धेन कल्पना, तदुत्कर्षस्य तस्य संभाव्यधर्मस्य य उत्कर्षस्तस्य कल्पना चातिशयोक्तिः। उदाहरति-- **उभाविति**। यदि तथाविधं व्योम संभाव्येत, तदेव आमुक्तमुक्ताफलस्य वक्षस उपमानं भवेत् न पुनरन्यत् किंचिदित्यतिशयस्योक्तेरतिशयोक्तिः। एवं संभाव्यधर्मकल्पनामुदाहृत्य तदुत्कर्षकल्पनामुदाहरति-- **मलयजेति**। मलयजरसनवहारलतादीनां तावान् धावल्यस्योत्कर्षोऽतिशयः कल्प्यते, यावता चन्द्रिकायां तद्विवेचनाक्षमत्वं चक्षुषोरिति।

यथा भ्रान्तिज्ञानस्वरूपा उत्प्रेक्षा, तथा संशयज्ञानस्वरूपः संदेहोऽपीति दर्शयितुमाह—

## उपमानोपमेयसंशयः संदेहः ॥ ११ ॥

उपमानोपमेययोरतिशयार्थं यः क्रियते संशयः, स संदेहः ।

यथा—

'इदं कर्णोत्पलं चक्षुरिदं वेति विलासिनि ।
न निश्चिनोति हृदयं किंतु दोलयते मनः ॥'

संदेहवद्विरोधोऽपि प्राप्तावसर इत्याह—

## विरुद्धाभासत्वं विरोधः ॥ १२ ॥

अर्थस्य विरुद्धस्येवाभासत्वं विरुद्धाभासत्वं विरोधः ।

यथा—

'पीतं पानमिदं त्वयाद्य दयिते मत्तं ममेदं मनः
पत्रालीं तव कुङ्कुमेन रचिता रक्ता वयं मानिनि ।

---

यथा 'लौकिकभ्रमसजातीयामुत्प्रेक्षामतिशयार्थकल्पनात्ववैधर्म्येण लौकिकभ्रान्तितः पृथक्कृत्य प्रदर्शितवान्, तथा संशयमपि लौकिकसजातीयं तथाविधेन वैधर्म्येण ततः पृथक्कृत्य दर्शयितुमाह— **यथेति** । संदेहस्य कोटिद्वयावलम्बित्वादिहापि तदाह— **उपमानोपमेययोरिति** । **अतिशयार्थमिति** । उपमेये अतिशयमाधातुं संदेहः संपाद्यते, न तु विशेषादर्शनादित्यर्थः । व्यक्तमुदाहरणम् ।

कल्पनारूपत्वाविशेषादतिशयोक्तेरनन्तरं यथा संदेहालङ्कारः प्राप्तावसरः, तथा विरुद्धकोटिद्वयावलम्बिनः संदेहस्यानन्तरं विरोधालंकारः प्राप्तावसर इति तल्लक्षणं दर्शयतीत्याह — **संदेहवदिति** । व्याचष्टे— **अर्थस्येति** । विरुद्धवदवभासत इति विरुद्धाभासस्तस्य भावस्तत्त्वम् । प्रकारान्तरेण परिहारे सत्येव विरुद्धस्यार्थस्यावभासनं विरोधालंकारः । उदाहरति— **यथेति** । पानशब्दोऽत्र

त्वं तुङ्गस्तनभारमन्थरगतिर्गात्रेषु मे वेपथु-
स्त्वन्मध्ये तनुता ममाधृतिरहो प्रेम्णो विचित्रा गतिः ॥'

यथा वा—

'सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥'

विरोधाद्विभावनाया भेदं दर्शयितुमाह—

**क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्ति-
र्विभावना ॥ १३ ॥**

क्रियायाः प्रतिषेधे तस्या एव क्रियायाः फलस्य प्रसिद्धस्य व्यक्तिर्विभावना ।

यथा—

'अप्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥'

विरोधप्रसङ्गेनानन्वयं दर्शयितुमाह—

**एकस्योपमेयत्वोपमानत्वेऽनन्वयः ॥ १४ ॥**

---

कर्मसाधनः पेयद्रव्यमाह । पानादीनां च वैयधिकरण्याद्विरोधः । मदादीनामर्थान्तरत्वस्वीकारेण विरोधपरिहारः । सा बालेत्यादावपि विरुद्धाभासत्वं द्रष्टव्यम्'।

विभावनां विवरीतुमवतारिकामारचयति— **विरोधादिति** । लक्षणवाक्यार्थं विवृणोति— **क्रियाया इति** । क्रियायाः कारणरूपायाः प्रतिषेधे प्रसिद्धस्य तस्याः क्रियायाः फलस्य कार्यभूतस्य व्यक्तिः प्रकाशनं यत्, सा विभावनेति वाक्यार्थः । विरोधविशेषो विभावनेति भेदः । **अप्यसज्जनेति** । विकृतमेव वैकृतम् । प्रज्ञादित्वात् स्वार्थेऽण् । अक्षालितविशुद्धेष्वित्यत्र कारणरूपक्षालनक्रियाप्रतिषेधेऽपि तत्फलभूताया विशुद्धेः प्रकाशनात् विभावना ।

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं चानन्वयः ।

यथा—

'गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥'

अन्यासादृश्यमेतेन प्रतिपादितम् ।

**क्रमेणोपमेयोपमा ॥ १५ ॥**

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं च क्रमेण उपमेयोपमा ।

यथा—

'खमिव जलं जलमिव खं हंस इव शशी शशीव हंसोऽयम् ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥'

इयमेव परिवृत्तिरित्येके; तन्निरासार्थमाह—

**समविसदृशाभ्यां परिवर्तनं परिवृत्तिः ॥ १६ ॥**

समेन विसदृशेन वार्थेन अर्थस्य परिवर्तनं परिवृत्तिः ।

---

अनन्वयं वक्तुमाह—**विरोधेति** । एकस्यैवार्थस्यैकस्मिन्नेव वाक्ये उपमानान्तरव्युदासेनातिशयमाधातुमुपमानत्वं चोपमेयत्वं चोपकल्प्यते । तत्र व्यधिकरणयोर्धर्मयोरुपमानत्वोपमेयत्वयोरेकत्रान्वयासंभवादनन्वयालंकारः । **रामरावणयोरिति** । स्पष्टम् । एकस्यैवोपमानोपमेयत्वकल्पनायां फलितमाह—**अन्येति** । उपमानान्तरेण असादृश्यं सादृश्याभावः ।

उपमेयोपमामुपपादयितुमुपरितनं सूत्रमुपादत्ते— **क्रमेणेति** । एकस्यैवेत्यनुवर्तते । यत्र क्रमेण वाक्यद्वये एकस्यैव वस्तुन उपमानत्वमुपमेयत्वं च निबध्यते तत्रोपमेयोपमा । **खमिवेति** । उदाहरणं स्पष्टम् ।

साम्यशङ्कायामुपमेयोपमातः परिवृत्तिं व्यावर्तयितुं लक्षणं दर्शयतीत्याह—**इयमेवेति** । व्याचष्टे— **समेनेति** । समेन समानेन विसदृशेन असदृशेन वा

यथा—

'आदाय कर्णकिसलयमियमस्मै चरणमरुणमर्पयति ।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ॥'

यथा—

'विहाय सा हारमहार्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दना ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥'

उपमेयोपमायाः क्रमो भिन्न इति दर्शयितुमाह—

**उपमेयोपमानानां क्रमसंबन्धः क्रमः ॥ १७ ॥**

उपमेयानामुपमानानां चोद्देशिनामनूद्देशिनां च क्रमसंबन्धः क्रमः ।

यथा—

'तस्याः प्रबन्धलीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकीकुन्दकुसुमेन्दीवरस्रजः ॥'

क्रमसंबन्धप्रसङ्गेनैव दीपकं दर्शयितुमाह—

**उपमानोपमेयवाक्येष्वेका क्रिया दीपकम् ॥ १८ ॥**

उपमानवाक्येषूपमेयवाक्येषु चैका क्रिया अनुषङ्गतः संबध्यमाना

---

अर्थेन अर्थस्य यत्परिवर्तनं विनिमयः, सा परिवृत्तिः । उदाहरति— **यथेति** । अत्र प्रसारिताख्यं करणं सूचितमिति केचिदाचक्षते । 'नायकस्यांस एको द्वितीयः प्रसारित इति प्रसारितकम्' इति वात्स्यायनसूत्रम् । तद्विवृतं रतिरहस्ये, 'प्रियस्य वक्षोऽसतलं शिरोऽथवा नयेत सव्यं चरणं नितम्बिनी । प्रसारयेद्वा परमायतं पुनर्विपर्ययः स्यादिति हि प्रसारितम्' इति । अत्र चरणकिसलययोः सादृश्यात् समपरिवृत्तिः । विहायेत्यादौ हारवल्कलयोर्वैसादृश्याद्विसदृशपरिवृत्तिः ।

क्रमालंकारं कथयितुमाह— **उपमेयेति** । वृत्तिः स्पष्टार्था । प्रबन्धेनाविच्छेदेन लीला यासां ताभिः प्रबन्धलीलाभिः ।

क्रमदीपकयोः सौहार्दमुन्मुद्रयन् सूत्रमवतारयति— **क्रमेति** । व्याचष्टे—**उपमानेति**। एकस्यैव प्रधानसंबन्धितया सकृदुपात्तस्य पदस्य वाक्यान्त-

दीपकम् ।

**तत्त्रैविध्यमादिमध्यान्तवाक्यवृत्तिभेदात् ॥ १९ ॥**

तत् त्रिविधं भवति, आदिमध्यान्तेषु वाक्येषु वृत्तेर्भेदात् ।

यथा—

'भूष्यन्ते प्रमदवनानि बालपुष्पैः
कामिन्यो मधुमदमांसलैर्विलासैः ।
ब्रह्माणः श्रुतिगदितैः क्रियाकलापै
राजानो विरलितवैरिभिः प्रतापैः ॥'

'बाष्पः पथिककान्तानां जलं जलमुचां मुहुः ।
विगलत्यधुना दण्डयात्रोद्योगो महीभुजाम् ॥'

'गुरुशुश्रूषया विद्या मधुगोष्ठ्या मनोभवः ।
उदयेन शशाङ्कस्य पयोधिरभिवर्धते ॥'

दीपकवन्निदर्शनमपि संक्षिप्तमित्याह—

**क्रिययैव स्वतदर्थान्वयख्यापनं निदर्शनम् ॥ २० ॥**

क्रिययैव शुद्धया स्वस्यात्मनस्तदर्थस्य चान्वयस्य संबन्धस्य ख्यापनं संलुलितहेतुदृष्टान्तविभागदर्शनात् निदर्शनम् ।

---

रेषु प्रसङ्गात् संबन्धोऽनुषङ्गः ।

तद्भेदमाह—**तत्त्रैविध्यमिति** । भूष्यन्त इत्यत्र आदिदीपकम् । ब्रह्माणः ब्राह्मणाः । बाष्प इत्यत्र मध्यदीपकम् । गलनं बाष्पजलयोः स्यन्द, दण्डयात्रोद्योगे नाशः । गुरुशुश्रूषयेत्यत्र अन्तदीपकम् । एवमेव कारकदीपकमप्यूहनीयम् ।

निदर्शनं दर्शयितुमाह— **दीपकवदिति** । शुद्धया अनन्यसहायया क्रिययैवावृत्तिरहितयेत्यर्थः । स्वस्य तदर्थस्य सा क्रिया अर्थः प्रयोजनं यस्य तत्तदर्थं स्वप्रयोजनकमर्थान्तरमित्यर्थः । तयोः स्वतदर्थयोरन्वयस्य संबन्धस्य ख्यापनं निदर्शनम् । निदर्शनपदार्थं निर्वक्ति— **संलुलितेति** । संलुलितः

यथा—

'अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत् ।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः ॥'

पततीति क्रिया । तस्याः स्वं पतनम् । तदर्थः अत्युच्चपदाध्यासः । तयारन्वयः अत्युच्चपदाध्यासः पतनायेति । तस्य ख्यापनम् अर्थशालिनां शंसदिति ।

इदं च नार्थान्तरन्यासः; स तु यथाभूतस्तमाह—

## उक्तसिद्ध्यै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः ॥ २१ ॥

उक्तसिद्ध्यै उक्तस्यार्थस्य सिद्ध्यर्थं वस्तुनो वाक्यार्थान्तरस्यैव न्यसनमर्थान्तरन्यासः । वस्तुग्रहणात्पदार्थस्य हेतोर्न्यसनं नार्थान्तरन्यासः। यथा—'इह नातिदूरगोचरमस्ति सरः कमलसौगन्ध्यात्' इति । अर्थान्तरस्यैवेति वचनम्, यत्र हेतुर्व्याप्तिगूढत्वात् कथंचित्प्रतीयते तत्र यथा स्यात्; यद्यत् कृतकं तत्तदनित्यमित्येवंप्रायेषु मा भूदिति ।

---

अविवेचितः हेतुदृष्टान्तयोर्विभागस्तस्य दर्शनाद्विवेचनात्, निगूढहेतुदृष्टान्तदर्शनरूपत्वान्निदर्शनमित्यर्थः । उदाहरति— अत्युच्चेति । अर्थशालिनाम् अर्थोल्लेखशालिनां धनशालिनां वा । लक्ष्यलक्षणयोरानुकूल्यमुन्मीलयति— पततीति क्रियेति ।

अर्थान्तरन्यासं समर्थयितुं सूत्रसंगतिं सूचयति— इदं चेति । उक्तस्य वाक्यार्थस्य सिद्ध्यै। वाक्यार्थान्तरस्य अन्यस्य वाक्यार्थस्यैव । वस्तुग्रहणप्रयोजनं प्रस्तौति— वस्त्विति । प्रत्युदाहरणं प्रदर्शयति— यथेति । अत्र कमलसौगन्ध्यादिति हेतोः पदार्थरूपत्वात् तस्य न्यसनं नार्थान्तरन्यासः । अवधारणप्रयोजनमभिधत्ते— अर्थान्तरस्यैवेति वचनमिति । यत्र वस्तुतो हेतुरूपमेवार्थान्तरं तद्व्याप्तिस्तु यत्नगौरवेण प्रतीयते, तत्रालंकारता यथा स्यात्, प्रसिद्धव्याप्तिस्थले तु मा भूदित्येवमर्थमेवकारकरणमित्यर्थः । उदाहर्तुमाह— उदाहर

उदाहरणम्—

प्रियेण संग्रथ्य विपक्षसंनिधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥'

अर्थान्तरन्यासस्य हेतुरूपत्वात्, हेतोश्चान्वयव्यतिरेकात्मकत्वात् न ततः पृथग्व्यतिरेक इति केचित्; तन्निरासार्थमाह—

**उपमेयस्य गुणातिरेकित्वं व्यतिरेकः ॥ २२ ॥**

उपमेयस्य गुणातिरेकित्वं गुणाधिक्यं यत् अर्थादुपमानात्, स व्यतिरेकः ।

यथा—

'सत्यं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम् ।
समानं शशिनः किंतु स कलङ्कविडम्बितः ॥'

कश्चित्तु गम्यमानगुणो व्यतिरेकः ।

यथा—

'कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं
हसितममृतं भग्नं स्वादोः पदं रससंपदः ।

---

णमिति । प्रियेणेति । अत्र विशेषरूपमुपमेयं सामान्येनोपमानेन समर्थ्यते ।

अर्थान्तरन्यासव्यतिरेकयोर्भेदं दर्शयितुमभेदशङ्कामुन्मीलयति— **अर्थान्तरेति** । व्याचष्टे— **उपमेयस्येति** । गुणशब्दोऽत्र धर्ममात्रवचनः । स च वाच्यो गम्यश्चेति द्विविध । उभयोऽप्युपमानगतस्तदपकर्षहेतुः उपमेयगतस्तदुत्कर्षहेतुश्चेति द्विविधो भवति । यदा उपमानगतस्तेन तदपकर्षहेतुना गुणेनोपमेयस्य गुणातिरेकित्वमर्थाद्भवति । तदा गुणातिरेकित्वमार्थम् । यदा पुनरुपमेयगतस्तदा तेन तदुत्कर्षहेतुना अर्थादुपमानादुपमेयस्य गुणातिरेकित्वं भवति । तदा शाब्दमतिरेकित्वम् । तत्रोपमानगतवाच्यगुणप्रयुक्तं व्यतिरेकमुदाहरति—**सत्यमिति** । अत्र कलङ्कविडम्बितपदवाच्येनोपमानस्यापकर्षहेतुना

विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिनां
चतुरललितैर्लीलातन्त्रैस्त्वयार्धविलोकितैः ॥'

व्यतिरेकाद्विशेषोक्तेर्भेदं दर्शयितुमाह—

**एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ॥ २३ ॥**

एकस्य गुणस्य हानेः कल्पनायां शेषैर्गुणैः साम्यं यत्, तस्य दार्ढ्यं विशेषोक्तिः । रूपकं चेदं प्रायेणेति ।

यथा—

'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ।'

'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।'

'इयं ह्यकमला लक्ष्मीः ।'

'हस्ती हि जङ्गमं दुर्गम्' इति ।

जङ्गमशब्दस्य स्थावरत्वनिवृत्तिप्रतिपादनपरत्वादेकगुणहानिकल्पनैव । एतेन 'वेश्या हि नाम मूर्तिमत्येव निकृतिः' 'व्यसनं हि नाम

कलङ्कित्वगुणेनोपमेयस्यार्थादकलङ्कित्वलक्षणं गुणातिरेकित्वमिति व्यतिरेकः । उपमानगतगम्यमानगुणप्रयुक्तं व्यतिरेकमुदाहरति—**कुवलयवनमिति** । कुवलयवनंमध्यादिषु प्रत्याख्याननिन्दनादिभिरवगम्यमानेन निकर्षहेतुना चतुरललितलीलातन्त्रत्वराहित्यलक्षणेन गुणेनार्धविलोकितेषु चतुरललितलीलातन्त्रत्वरूपं गुणातिरेकित्वं शाब्दमपि प्रकृष्टतया प्रतिष्ठापितं भवतीति गम्यमानगुणप्रयुक्तो व्यतिरेकः । अर्थान्तरन्यासे व्यतिरेको विपक्षव्यावृत्तिः । अत्र तु गुणाधिक्यमिति भेदः ।

विशेषोक्तिं विवेक्तुमाह—**व्यतिरेकादिति** । **एकस्येति** । अर्थादुपमेयगतस्य । **हानिः** लोपः । अवर्जनीयतया रूपकमपि संभवतीत्याह—**रूपकमिति** । अतैलपूरा इति, असिंहासनमिति, अकमलेत्यत्रैकगुणहानिकल्पना सिध्यति । ननु जङ्गममित्येकगुणहानिकल्पनाया अप्रतीतेः कथं विशेषोक्तिरिति तत्राह—**जङ्गमशब्दस्येति** । समर्थितामेकगुणहानिकल्पनामन्यत्रातिदिशति— **एतेनेति** ।

सोच्छ्वासं मरणम्' 'द्विजो भूमिबृहस्पतिः' इत्येवमादिष्वेकगुणहानिकल्पना व्याख्याता।

व्यतिरेकविशेषोक्तिभ्यां व्याजस्तुतिं भिन्नां दर्शयितुमाह—

**संभाव्यविशिष्टकर्माकरणान्निन्दा स्तोत्रार्था व्याजस्तुतिः॥ २४॥**

अत्यन्तगुणाधिको विशिष्टः, तस्य च कर्म विशिष्टकर्म, तस्य संभाव्यस्य कर्तुं शक्यस्य अकरणान्निन्दा विशिष्टसाम्यसंपादनेन स्तोत्रार्था व्याजस्तुतिः।

यथा—

'बबन्ध सेतुं गिरिचक्रवालै-
र्बिभेद सप्तैकशरेण तालान्।
एवंविधं कर्म ततान राम-
स्त्वया कृतं तन्न मुधैव गर्वः॥'

व्याजस्तुतेर्व्याजोक्तिं भिन्नां दर्शयितुमाह—

**व्याजस्य सत्यसारूप्यं व्याजोक्तिः॥ २५॥**

'कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः। मूर्तिमत्येवेत्यत्रामूर्तत्वनिवृत्तिः' सोच्छ्वासमित्यत्रानुच्छ्वासतानिवृत्तिः, भूमिबृहस्पतिरित्यत्राभौमत्वनिवृत्तिश्च प्रतिपाद्यत इत्येकगुणहानिकल्पना अवगन्तव्या।

व्याजस्तुतिं व्याख्यातुं प्रसङ्गं परिकल्पयति— **व्यतिरेकेति**। व्याचष्टे— **अत्यन्तेति**। विशिष्टो रामादिरुपमानभूतस्तस्य कर्म सेतुबन्धनादि। तस्य कर्तुं शक्यस्य कर्मणोऽकरणाद्वर्णनीयस्य निन्दा रामादिसाम्यापादनात् स्तुतिपर्यवसायिनी व्याजस्तुतिः। **बबन्धेति**। त्वं राम एवासीति तात्पर्यम्। निन्दाव्याजेन स्तुतिरूपत्वात् व्यतिरेकविशेषोक्तिभ्यां भेदः।

व्याजोक्तिं व्याकर्तुमाह— **व्याजस्तुतेरिति**। व्याचष्टे— **व्याज-**

व्याजस्य च्छद्मनः सत्येन सारूप्यं व्याजोक्तिः; यां मायोक्तिरित्याहुः।

यथा—

शरच्चन्द्रांशुगौरेण वाताविद्धेन भामिनि।
काशपुष्पलवेनेदं साश्रुपातं मुखं कृतम्॥'

व्याजस्तुतेः पृथक् तुल्ययोगितेत्याह—

## विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता॥ २६॥

विशिष्टेन न्यूनस्य साम्यार्थमेककालायां क्रियायां योगः तुल्ययोगिता।

यथा—

'जलनिधिरशनामिमां धरित्रीं वहति भुजङ्गविभुर्भवद्भुजश्च।'

## उपमानाक्षेपश्चाक्षेपः॥ २७॥

**स्येति**। असत्यस्येत्यर्थः। **सत्येन** यथार्थेन। **सारूप्यं** सत्यत्वकल्पनया समुन्मिषितं सादृश्यम्। असत्यस्य सत्यत्ववचनं व्याजोक्तिरिति लक्षणार्थः। व्याजोक्तिमिमां मतान्तरे संज्ञान्तरेण व्यवहरन्ति, न तु स्वरूपभेद इत्याह—**यामिति**। उदाहरति—**शरदिति**। चन्द्रांशुगौरेणेत्यनेन चन्द्रिकायां काशपुष्पलवस्याविवेचनीयता सूचिता। वाताविद्धेनेत्यनेन अप्रसक्तिशङ्का निराकृता। अत्र सत्येन सात्त्विकभावेन कृतोऽश्रुपातः पुष्पलवेन कृत इत्यसत्यस्य सत्यतोक्तिः। अत एव व्याजस्तुतितो भेदः।

तुल्ययोगितां वक्तुमाह—**व्याजोक्तेः पृथ**गिति। विशिष्टेन गुणाधिकेनोपमानेनेति यावत्। अर्थादत्र न्यूनस्येत्यनेनोपमेयस्येत्यवगम्यते। एकः कालो यस्याः सा एककाला तस्यां क्रियायां साम्यार्थं यो योगः, सा तुल्ययोगिता। उदाहरति—**जलनिधीति**।

आक्षेपं लक्षयितुं सूत्रमुपक्षिपति—**उपमानेति**। उपमानस्य तादृशि उपमेये

उपमानस्य आक्षेपः प्रतिषेध उपमानाक्षेपः; तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायाम् आक्षेपः ।

यथा—

'तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ यदि च ते किं नाम नीलोत्पलैः ।
किं वा कोमलकान्तिभिः किसलयैः सत्येव बिम्बाधरे
हा धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥'

उपमानस्य आक्षेपः आक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः ।

यथा—

'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥'

अत्र शरद्वेश्येव, इन्दुं नायकमिव, रवेः प्रतिनायकस्येवेत्युपमानानि गम्यन्त इति ॥

तुल्ययोगितायाः सहोक्तेर्भेदमाह—

## वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः ॥ २८ ॥

वस्तुद्वयस्य क्रिययोस्तुल्यकालयोरेकेन पदेनाभिधानं सहार्थशब्दसामर्थ्यात् सहोक्तिः ।

---

सति नैरर्थक्यविवक्षायां प्रतिषेध आक्षेप इति वाक्यार्थः । तस्याश्चेन्मुखमित्युदाहरणम् । चकारेण समुच्चितमर्थमाह—उपमानस्याक्षेप इति । आक्षेपोऽत्राकर्षणम् । ऐन्द्रं धनुरित्युदाहरणम् । अत्राक्षेपलभ्यं प्रकटयति—अत्र शरदिति ।

सहोक्तिं वक्तुमाह—तुल्ययोगितायाा इति । वस्तुद्वयसंबन्धिन्योः क्रिययोः सहार्थानां सहशब्दपर्यायाणां ग्रहणसामर्थ्यादेकेन पदेनाभिधानं सहोक्तिः ।

यथा—

'अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ।'

अत्रार्थयोर्न्यूनत्वविशिष्टत्वे न स्त इति नेयं तुल्ययोगितेति ।

समाहितमेकमवशिष्यते ; तल्लक्षणार्थमाह—

**यत्सादृश्यं तत्संपत्तिः समाहितम् ॥ २९ ॥**

यस्य वस्तुनः सादृश्यं गृह्यते, तस्य वस्तुनः संपत्तिः समाहितम् ।

यथा—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥'

अत्र पुरूरवसो लतायामुर्वश्याः सादृश्यं गृह्णतः सैव लतोर्वशी संपन्नेति ।

एते चालंकाराः शुद्धा मिश्राश्च प्रयोक्तव्या इति विशिष्टानाम-

---

स्पष्टमुदाहरणम् । उभयोरलंकारयोर्भेदं दर्शयति— **अत्रेति** ।

समाहितं समीरयितुमाह—**समाहितमिति** । शुद्धेष्वलंकारभेदेषु समाहितमेकं लक्षयितुमवशिष्यत इत्यर्थः । **यस्येति** । तस्य संपत्तिस्तदाकारतापरिणतिः, ताद्रूप्यसंपत्तिरिति यावत् । अत्रोदाहरणं विक्रमोर्वशीये दर्शयितुमाह— **तन्वीति** । लतायामुर्वशीसादृश्यं पश्यतः पुरूरवस इयमुक्तिः । **अत्रेति** । लतामवलोक्य तत्राश्रुधौताधरत्वाभरणशून्यत्वचिन्तामौनाश्रितत्वाध्यवसायेन सा तादृश्युर्वशीवेत्युत्प्रेक्षमाणस्य पुरूरवसः सैव लतोर्वशी संपन्नेति लतायाः उर्वशीत्वसंपत्तेः संभवात् समाहितम् । समनन्तरक्षणभावित्वेऽपि तत्संपत्तेस्तस्य तात्त्विकत्वाभिमानं सूचयितुं भूतप्रत्ययः ॥

शुद्धालंकारनिरूपणोपसंहारव्याजेन मिश्रालंकारनिरूपणाय प्रसङ्गं प्रस्फोरयति— **एते चेति** । शुद्धाः पूर्वं लक्षिताः । मिश्राः संसृष्टिभेदाः । शुद्धा इव मिश्रा अप्यलंकाराः प्रयोगयोग्याः, शोभातिशयहेतुत्वादिति भावः । इतिशब्दो

लंकारणां मिश्रत्वं संसृष्टिरित्याह—

**अलंकारस्यालंकारयोर्नित्वं संसृष्टिः ॥ ३० ॥**

अलंकारस्य अलंकारयोर्नित्वं यत्, असौ संसृष्टिरिति । संसृष्टिः संसर्गः संबन्ध इति ।

**तद्भेदावुपमारूपकोत्प्रेक्षावयवौ ॥ ३१ ॥**

तस्याः संसृष्टेर्भेदौ—उपमारूपकं चोत्प्रेक्षावयवश्चेति ।

**उपमाजन्यं रूपकमुपमारूपकम् ॥ ३२ ॥**

यथा —

'निरवधि च निराश्रयं च यस्य
स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्ति-
र्जयति चतुर्दशलोकवल्लिकंदः ॥'

एवं 'रजनिपुरंध्रिलोध्रतिलकः शशी' इत्येवमादयस्तद्भेदा द्रष्टव्याः ।

हेतौ । विशिष्टानामलंकाराणाम् अलंकारविशेषाणाम् । ससृष्टेर्लक्षणमाह—**अलंकारस्येति** । कार्यकारणभावापन्नयोरलंकारयो. संबन्धः संसृष्टिरित्यर्थः ।

संसृष्टिविभागं दर्शयितुं सूत्रमनुभाषते—**तद्भेदाविति** । अलंकारयोनित्वमित्यत्र यथाक्रमं बहुव्रीहितत्पुरुषाश्रयणेन द्वौ भेदौ भवतः—उपमारूपकमुत्प्रेक्षावयवश्चेति ॥

तत्राद्यं लक्षयितुं सूत्रमुपक्षिपति— **उपमाजन्यमिति** । सूत्रमिदं निगदव्याख्यानमित्यभिसंधाय उदाहरणं दर्शयति--**यथेति** । नन्वत्र कूर्ममूर्तेः कंदत्वारोपाल्लोकानां वल्लित्वारोपणं वक्तुं युक्तम् । तथा च रूपकजन्यमिह रूपकमिति वक्तव्यम् । यन्मतान्तरे परंपरितरूपकमित्युच्यते । तत्कथमिदमुपमाजन्यं रूपकमिति चेत्, सत्यम्; लोको वल्लिरिव लोकवल्लिः । व्याघ्रादेराकृतिगणत्वादुपमितसमासः । लोकवल्ल्याः कंद इति कूर्ममूर्तौ कंदत्वारोपणमिह ग्रन्थकृतो विवक्षितमिति न दोषः । इत्थमेव रजनिपुरंध्रीत्यादावपि द्रष्टव्यम् ।

## उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः ॥ ३३ ॥

उत्प्रेक्षाया हेतुरलंकार उत्प्रेक्षावयवः । अवयवशब्दो ह्यारम्भकं लक्षयति ।

यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः ।
शब्दवैचित्र्यगर्भेयमुपमैव प्रपञ्चिता ॥

अलंकारैकदेशा ये मताः सौभाग्यभागिनः ।
तेऽप्यलंकारदेशीया योजनीयाः कवीश्वरैः ॥

इति काव्यालंकारसूत्रवृत्तौ आलंकारिके चतुर्थेऽधिकरणे
तृतीयोऽध्यायः ॥
**समाप्तं चेदमालंकारिकं चतुर्थमधिकरणम् ॥**

---

उत्प्रेक्षावयवं लक्षयितुमाह— उत्प्रेक्षाहेतुरिति । अवयवशब्द इति । अवयव आरम्भको हेतुरित्यर्थः । अङ्गुलीभिरिति । अत्रोपमारूपकानुप्राणितस्य श्लेषस्य उत्प्रेक्षोपपादकत्वादुत्प्रेक्षावयवत्वम् । अमीषामलंकाराणामुपमाप्रपञ्चरूपत्वमुपपादितमुपसंहरति— एभिरिति । निदर्शनैः उदाहरणैः । अलंकाराणामप्येकलक्षणलक्षितानां शोभातिशयजनकत्वं कैमुतिकन्यायेन सिद्धमिति सूचयितुं तदेकदेशानामपि शोभातिशयहेतुत्वमस्तीत्याह— अलंकारेति ।

इति कृतरचनायामिन्दुवंशोद्वहेन
त्रिपुरहरधरित्रीमण्डलाखण्डलेन ।
ललितवचसि काव्यालंक्रियाकामधेना
वधिकरणमयासीत्पूर्तिमेतत्तुरीयम् ॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति
व्याख्यायां काव्यालंकारकामधेनौ आलंकारिकं नाम
**चतुर्थमधिकरणम् ॥**



# पञ्चममधिकरणम् ॥

—(:ॐ:)—

संप्रति काव्यसमयं शब्दशुद्धिं च दर्शयितुं प्रायोगिकाख्यमधिकरणमारभ्यते। तत्र काव्यसमयस्तावदुच्यते—

**नैकं पदं द्विः प्रयोज्यं प्रायेण ॥ १ ॥**

एकं पदं न द्विः प्रयोज्यं प्रायेण बाहुल्येन।

यथा—'पयोदपयोद' इति। किंचिद्धि चादिपदं द्विरपि प्रयोक्तव्यमिति।

**नित्या संहितैकपदवत्पादेष्वर्धान्तवर्जम् ॥ २ ॥**

किरन्ती कौतुकस्मेरैः कटाक्षैः करुणामृतम्।
समये संनिधत्तां मे संलपन्ती सरस्वती ॥

निर्हेतुके नियतिनिःस्पृहमुज्जिहाने
कान्तानिभे कविवरप्रतिभाविवर्ते।
प्रत्यर्थिशून्यपरनिर्वृतिके प्रपञ्चे
सारस्वतेऽस्तु समयः सुधियानुपाल्यः ॥

प्रायोगिकं पञ्चममधिकरणमारभ्यते। अधिकरणान्तरारम्भौचित्यमासूत्रयति—**संप्रतीति।** संप्रतिशब्देन काव्यस्य प्रयोजनाधिकार्यात्माङ्गभेददोषगुणालंकारेषु दर्शितेषु प्रयोगनियमशब्दशुद्ध्योः प्राप्तावसरत्वं प्रत्याय्यते। प्रयोगविषये नियामकत्वेन भवतीति प्रायोगिकम्। तयोः प्रथमं प्रयोगमर्यादा पर्यालोच्यत इत्याह— **तत्रेति। समयः** संकेतः, प्रयोगे वर्ज्यावर्ज्यनियम इति यावत्। **न द्विः प्रयोज्यमिति।** प्रतीतिवैरस्यादशक्तिसूचकत्वाच्चेत्यभिप्रायः। प्रायग्रहणस्य प्रयोजनमाह—**किंचिद्धीति।** यथा—'ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः।' इति। आदिग्रहणात् पदानुप्रासपादयमकेषु द्विःप्रयोगो न दोषायेति द्रष्टव्यम्।

नित्या संहिता पादेषु एकपदवत् एकस्मिन्निव पदे । तत्र हि नित्या संहितेत्याम्नायः । यथाहुः—'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।' इति । अर्धान्तवर्जम् अर्धान्तं वर्जयित्वा ।

## न पादान्तलघोर्गुरुत्वं च सर्वत्र ॥ ३ ॥

पादान्तलघोर्गुरुत्वं प्रयोक्तव्यम्; न सर्वत्र न सर्वस्मिन् वृत्त इति ।

यथा—

'यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥'

एवंप्रायेष्वेव वृत्तेष्विति ।

न पुनः—'वरूथिनीनां रजसि प्रसर्पति समस्तमासीद्विनिमीलितं जगत् ।' इत्यादिषु ।

चकारोऽर्धान्तवर्जमित्यस्यानुकर्षणार्थः ।

---

**नित्येति** । एकस्मिन् पदे संहिता प्रकृष्टसंनिकर्षो यथा नित्या, तथा पादेष्वपि संहिता नित्या भवति । **आम्नायः** प्रमाणवचनम् । तं दर्शयति—**संहितेति** । अविशेषेण सर्वत्र प्राप्तौ क्वचित्संहितां पर्युदस्यति— **अर्धान्तवर्जमिति** ।

यदपि 'वा पादान्ते' इति पादान्तवर्णस्य लघोर्गुरुत्वं विकल्पेन विहितम्, तदपि न सर्वत्र भवतीति प्रतिपादयितुमाह—**न पादान्तेति** । प्रथमं तावल्लघोर्गुरुत्वं दर्शयति— **यथेति** । **एवंप्रायेष्विति** 'श्रीतिप्पभूपालक मध्यलोकदेवेन्द्र वज्राङ्गदचन्द्रिकाभिः । त्वद्बाहुराभाति हसन्निवायं प्रौढौ प्रदाने मणिपारिजातौ ।' इत्यादिषु इन्द्रवज्रादिषु उपजातिभेदेष्वपि द्रष्टव्यम् । प्रतिषेधविषयं प्रदर्शयति— **न पुनरिति** । तेन 'वा पादान्ते' इति व्यवस्थितविभाषा वेदितव्या ।

**न गद्ये समाप्तप्रायं वृत्तमन्यत्रोद्धतादिभ्यः संवादात् ॥ ४ ॥**

गद्ये समाप्तप्रायं वृत्तं न विधेयम्, शोभाभ्रंशात्। अन्यत्रोद्धतादिभ्यो विषमवृत्तेभ्यः, संवादाद्गद्येनेति।

**न पादादौ खल्वादयः ॥ ५ ॥**

पादादौ खल्वादयः शब्दा न प्रयोज्याः। आदिशब्दः प्रकारार्थः। येषामादौ प्रयोगो न श्लिष्यति ते गृह्यन्ते। न पुनर्बतहन्तप्रभृतयः।

**नार्धे किंचित्समाप्तं वाक्यम् ॥ ६ ॥**

वृत्तस्यार्धे किंचित्समाप्तं वाक्यं न प्रयोक्तव्यम्।

यथा—

'जयन्ति ताण्डवे शंभोर्भङ्गुराङ्गुलिकोटयः।
कराः कृष्णस्य च भुजाश्चक्रांशुकपिशत्विषः॥'

---

न गद्य इति। गद्ये वृत्तगन्धिनि समाप्तप्रायं परिपूर्णकल्पं वृत्तं न विधेयम्। तत्र हेतुमाह— **शोभेति**। गद्यपरिपाटीविसंवादेन शोभाभ्रंशो जायत इत्यर्थः। **अन्यत्रेति**। उद्धतादिषु विषमवृत्तेषु गद्यसंवादिषु किंचिद्वृत्तं समाप्तप्रायमपि गद्ये प्रयोक्तव्यम्। तत्र हेतुः— **संवादादिति**। विसंवादाभावादित्यर्थः।

**न पादादाविति**। पादादौ खल्वादिप्रयोगो न श्लिष्यति, श्रुतिविरसत्वादिति भावः। यथा—'खलूक्त्वा खलु वाचिकम्' 'इव सीतागृहच्छद्मच्छन्नो लङ्कापतिः पुरा।' 'किल सृजति कामिनीनां किलकिञ्चितमेव कामिजनमोहम्।' इत्यादि।

**नार्ध इति**। **किंचित्समाप्तम्** एकपदावशेषं वाक्यम्। एकपदार्थावशेषवाक्यार्थप्रतिपादकमर्धमित्यर्थः। तादृशमर्धमुदाहरति— **जयन्तीति**।

### न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः ॥ ७ ॥

बहुव्रीहिप्रतिपत्तिं करोति यः कर्मधारयः, स न प्रयोक्तव्यः ।

यथा— अध्यासितश्चासौ तरुश्चाध्यासिततरुरिति ।

### तेन विपर्ययो व्याख्यातः ॥ ८ ॥

बहुव्रीहिरपि कर्मधारयप्रतिपत्तिकरो न प्रयोक्तव्यः ।

यथा—वीराः पुरुषा यस्य स वीरपुरुषः । कलो रवो यस्य स कलरवः इति ।

### संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ॥ ९ ॥

संभाव्यस्य निषेधस्य निवर्तने द्वौ प्रतिषेधौ प्रयोक्तव्यौ ।

यथा—

'समरमूर्धनि येन तरस्विना न न जितो विजयी त्रिदशेश्वरः ।
स खलु तापसबाणपरंपराकवलितक्षतजः क्षितिमाश्रितः ॥'

### विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ॥ १० ॥

विशेष्यस्य प्रतिपत्तौ जातायां विशेषणमात्रस्यैव प्रयोगः ।

**न कर्मधारय इति** । वृत्तिः स्पष्टार्था । तादृशमुदाहरणं दर्शयति— **अध्यासित इति** । निष्ठापूर्वपदत्वेन बहुव्रीहिप्रतिपत्तेरेव पुरःस्फूर्तिकत्वादिति भावः ।

**तेनेति** । समासान्तरप्रतिपत्तिकृतः 'समासस्य प्रयोगो न कार्य इति न्यायो यः फलितः पूर्वसूत्रे, तेनेत्यर्थः । विपर्ययशब्दं विवृणोति— **बहुव्रीहिरपीति** । **वीराः पुरुषा यस्येति** । राजा चासौ पुरुष इति, राजा पुरुषो यस्येति वा राजपुरुष इति कर्मधारयो बहुव्रीहिर्वा ईदृशो न कर्तव्य इति तात्पर्यम् ।

**संभाव्यस्येति** । संप्रतिपत्तियोग्यस्य, प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति भावः । **समरेति** । न जित इति न, किंतु जित एवेत्यर्थः ।

यथा—'निधानगर्भामिव सागराम्बराम् ।'

अत्र हि पृथिव्या विशेषणमात्रमेव प्रयुक्तम् ।

एतेन—

'क्रुद्धस्य तस्याथ पुरामरातेर्ललाटपट्टादुदगादुदर्चिः ।'

'गिरेस्तडित्वानिव तावदुच्चैर्जवेन पीठादुदतिष्ठदच्युतः ।'

इत्यादयः प्रयोगा व्याख्याताः ।

## सर्वनाम्नानुसंधिर्वृत्तिच्छन्नस्य ॥ ११ ॥

सर्वनाम्ना अनुसंधिः अनुसंधानं प्रत्यवमर्शः कार्यः, वृत्तिच्छन्नस्य वृत्तौ समासे च्छन्नस्य गुणीभूतस्य ।

यथा—'तवापि नीलोत्पलपत्रचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः ।' इति ।

## संबन्धसंबन्धेऽपि षष्ठी क्वचित् ॥ १२ ॥

संबन्धेन संबन्धः संबन्धसंबन्धः तस्मिन् षष्ठी प्रयोज्या क्वचित्, न सर्वत्रेति ।

---

विशेषणेति । यत्रानन्यसाधारणविशेषणमहिम्ना विशेष्यस्य प्रयोगमन्तरेण प्रतिपत्तिर्भवति, तत्र विशेषणमात्रप्रयोगः क्रियते । तदुदाहृत्य दर्शयति—निधानेति । अत्र सागराम्बरत्वं भुव एव, ऊर्ध्वार्चिर्योगश्चाग्नेरेव, तडित्संबन्धश्च मेघस्यैवेत्येषामनन्यसाधारणत्वम् । यत्र तु विशेषणमहिम्ना प्रतिपन्नं विशेष्यं साधारणविशेषणविशिष्टमभिधित्सितम्, तत्र विशेष्यस्यापि गतार्थस्य प्रयोगे न दोष इत्यपि द्रष्टव्यम् ।

सर्वनाम्नेति । अत्र भाष्यकारवचनं प्रमाणम्—'अथ शब्दानुशासनम् । केषाम्? शब्दानाम् ।' इति । तद्रेण्विति । अत्र तच्छब्दः समासे उपसर्जनीभूतं नीलोत्पलं परामृशति ।

यथा—'कमलस्य कंदः' इति । कमलेन संबद्धा कमलिनी तस्याः कंद इति संबन्धसंबन्धः । तेन कदलीकाण्डादयो व्याख्याताः ।

## अतिप्रयुक्तं देशभाषापदम् ॥ १३ ॥

अतीव कविभिः प्रयुक्तं देशभाषापदं प्रयोज्यम् ।

यथा—'योषिदित्यभिललाष न हालाम् ।' इत्यत्र हालेति देशभाषापदम् ।

अनतिप्रयुक्तं तु न प्रयोज्यम् ।

यथा— 'कङ्केलीकाननालीरविरलविलसत्पल्लवा नर्तयन्तः ।' इत्यत्र कङ्केलीपदम् ।

## लिङ्गाध्याहारौ ॥ १४ ॥

लिङ्गं च अध्याहारश्च लिङ्गाध्याहारौ अतिप्रयुक्तौ प्रयोज्याविति ।

लिङ्गं यथा— 'वत्से मा बहु निःश्वसीः कुरु सुरागण्डूषमेकं शनैः ।' इत्यादिषु गण्डूषशब्दः पुंसि भूयसा प्रयुक्तः न स्त्रियाम्, आम्नातोऽपि स्त्रीत्वे ।

अध्याहारो यथा—

'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥'

अत्र हि धाक्षीदित्यादीनामध्याहारोऽन्वयप्रयुक्त इति ।

---

संबन्धेति । संबन्धपारम्पर्येऽपि षष्ठी भवतीत्यर्थः । कदली हि समुदायस्तस्या गर्भस्तत्र काण्डमिति संबन्धसंबन्ध इति ।

अतिप्रयुक्तमिति । अतीव प्रयुक्तं प्रायशः प्रयुक्तम् । देशव्यवस्थिता भाषा देशभाषा, तत्र सिद्धं पदं देशभाषापदं देश्य पदमित्यर्थः । अतिना व्यावर्त्यं कीर्तयति— अनतीति । कङ्केलिरशोकः ।

लिङ्गाध्याहाराविति । अतिप्रयुक्तमित्यनुवर्तते । न स्त्रियामिति । 'शुण्डाग्रभागे गण्डूषा द्वयोस्तु मुखपूरणे' इति स्त्रीत्वेऽप्याम्नातः स्त्रियां न प्रयुज्यते । मा भवन्तमिति । धाक्षीदित्यत्र आदिपदेन भाङ्क्षीत्, छैत्सीत्, भैत्सीत्

**लक्षणाशब्दाश्च ॥ १५ ॥**

लक्षणाशब्दाश्च अतिप्रयुक्ताः प्रयोज्याः ।

यथा—द्विरेफरोदरशब्दौ भ्रमरचक्रवाकार्थौ लक्षणापरौ ।

अनतिप्रयुक्ताश्च न प्रयोज्याः । यथा—द्विकः काक इति ।

**न तद्बाहुल्यमेकत्र ॥ १६ ॥**

तेषां लक्षणाशब्दानां बाहुल्यमेकस्मिन् वाक्ये न प्रयोज्यम् । शक्यते ह्येकस्यावाचकस्य वाचकवद्भावः कर्तुम्, न बहूनामिति ।

**स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण ॥ १७ ॥**

स्तनादीनां द्वित्वाविष्टा द्वित्वाध्यासिता जातिः प्रायेण बाहुल्येनेति ।

यथा—'स्तनयोस्तरुणीजनस्य' इति । प्रायेणेति वचनात् क्वचिन्न भवति, यथा— 'स्त्रीणां चक्षुः' इति ।

---

इत्येषामध्याहारो न दुष्यति, अतिप्रयुक्तत्वेन बुद्ध्यारूढत्वादिति भावः ।

लक्षणाशब्दाश्चेति । द्वौ रेफौ यस्येति द्विरेफः । र उदरे यस्येति रोदरः । द्विरेफरोदरशब्दौ मुख्यया वृत्त्या भृङ्गरथाङ्गनामवाचकयोर्भ्रमरचक्रवाकशब्दयोर्वर्तेते, तेन तदर्थयो रेफसंबन्धाभावात् । अतो वाच्यवाचकयोरभेदोपचारेण तदर्थयोर्वर्तेते इति लक्षणाशब्दौ । 'चक्रवाको रोदरश्च कोकश्चक्राभिधाह्वयः' इति वैजयन्ती । यथा द्विरेफशब्दो भ्रमरे रोदरशब्दश्चक्रवाके; न तथा द्विक इति काके, अनतिप्रयुक्तत्वादिति । यदाहुः— 'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् । क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः' इति ।

**न बहूनामिति** । लक्षणापदबाहुल्ये क्लिष्टतादोषप्रसङ्गादिति भावः ।

**तरुणीजनस्येति** । जनशब्दः समूहवचनः । ननु न जातेर्द्वित्वाविष्ट-

अथ कथं द्वित्वाविष्टत्वं जातेः? तद्धि द्रव्ये, न जातौ; अतद्रूपत्वात्तस्याः। न दोषः; तद्रूपत्वाज्जातेः। कथं तद्रूपत्वं जातेः? तद्धि जैना जानन्ति। वयं तु लक्ष्यसिद्धौ सिद्धपरमतानुवादिनः। न चैवमतिप्रसङ्गः, लक्ष्यानुसारित्वान्न्यायस्येति। एवमन्यापि व्यवस्थोह्या।

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके

पञ्चमेऽधिकरणे प्रथमोऽध्यायः ॥

त्वमुपपद्यते। संख्याया द्रव्यधर्मत्वेन जातिधर्मत्वाभावादिति शङ्कते— **अथ कथमिति**। जातेर्द्रव्याभिन्नत्वान्नायं दोष इति परिहरति— **न दोष इति**। जातिव्यक्त्योरभेद एव कुत इति शङ्कते— **कथं तद्रूपत्वमिति**। जात्यपलापवादिनो जैनाः प्रष्टव्या इत्याह— **जैना इति**। अपसिद्धान्तशङ्कामवधीरयति— **वयं त्विति**। न वयं जातिमपलप्यान्यापोहवादं समर्थयामहे, किंतु सिद्धं परमतमनूद्य प्रयोगं प्रतिष्ठापयामः। एवं तर्हि यस्य कस्यचिन्मतमवलम्ब्य यत्किंचिदपि समर्थयितु शक्यत इत्यतिप्रसङ्गमाशङ्क्य परिहरति— **न चैवमिति**। यथा पाणिनीये क्वचिज्जातिः क्वचिद्व्यक्तिरिति पक्षद्वयमवलम्ब्य लक्ष्यनिर्वाहः क्रियते तद्वदत्रापि परमतमनुसृत्य प्रयोगनिर्वाहः कृतः। प्रसिद्धे लक्ष्ये सति तदनुसारी न्यायोऽन्विष्यते; न तु न्यायोऽस्तीति लक्ष्यमन्वेषणीयम्, लक्ष्यानुसारित्वान्न्यायस्येति। एवमन्या व्यवस्था प्रयोगमर्यादा स्वयं बुद्धिमद्भिरूहनीया।

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्तिव्याख्यायां काव्यालङ्कारकामधेनौ प्रायोगिके

**पञ्चमेऽधिकरणे प्रथमोऽध्यायः ॥**



# द्वितीयोऽध्यायः ॥

सांप्रतं शब्दशुद्धिरुच्यते—

**रुद्रावित्येकशेषोऽन्वेष्यः ॥ १ ॥**

रुद्रावित्यत्र प्रयोगे एकशेषः अन्वेष्यः अन्वेषणीयः । रुद्रश्च रुद्राणी चेति 'पुमान् स्त्रिया' इत्येकशेषः; स च न प्राप्नोति । तत्र हि 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तते इति तत्रैवकारकरणात् स्त्रीपुंसकृत एव यदि विशेषो भवतीति व्यवस्थितम् । अत्र तु 'पुंयोगादाख्यायाम्'

छिन्ते मोहं चित्प्रकर्षं प्रयुङ्क्ते सूते सूक्तिं सूयते या पुमर्थान् ।
प्रीतिं कीर्तिं प्राप्तुकामेन सैषा शाब्दी शुद्धिः शारदेवास्तु सेव्या ॥

अथेदानीमध्यायान्तरं व्याचिख्यासुस्तत्प्रयोजन प्रस्तौति—**सांप्रतमिति**। तत्र तावदेकशेषविषयं किंचिच्छोधयितु सूत्रमनुभाषते— **रुद्राविति** । 'पुमान् स्त्रिया' इत्येकशेषो विधीयते । तत्र 'वृद्धो यूना—' इति सूत्रात् 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तते । तदिति स्त्रीपुंसयोर्निर्देशः । लक्षणशब्दो निमित्तपर्यायः । चेच्छब्दो यद्यर्थे । एवकारोऽवधारणे । विशेषो वैरूप्यम् । स्त्रिया सह वचने पुमान् शिष्यते । स्त्रीपुंसलक्षण एव चेद्विशेषो भवति, स्त्रीपुंसकृतमेव यदि वैरूप्यं भवतीत्यर्थः । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणाविति । तद्वदेव रुद्रश्च रुद्राणी च रुद्रावित्यत्राप्येकशेषः प्राप्नोतीति यः कश्चिदभिमन्यते, तत्प्रतिषेधाय प्रयोगादर्शनं प्रत्याययति—**अन्वेषणीय इति** । न्यायतः प्राप्तौ प्रयोगोऽप्युन्नीयतामिति, तत्राह—**स च न प्राप्नोतीति** । अप्राप्तिमेव दर्शयितुमाह—**तत्र हीति** । अस्त्वेवं व्यवस्था, प्रकृते को विरोध इति तत्राह—**अत्र त्विति** । रुद्राणीत्यत्र 'पुंयोगादाख्यायाम्' इत्यनुवर्तमाने 'इन्द्रवरुण— ' इत्यादिना ङीष् विधीयते—पुंस आख्याभूतं यत्प्रातिपदिकं पुंयोगात् स्त्रियां वर्तते तस्मात् ङीष्प्रत्ययो भवतीति । अतस्तल्लक्षणविशेषव्यतिरेकेण विशेषान्तरस्यापि विद्यमानत्वान्नात्रैकशेषप्राप्तिरिति ।

इति विशेषान्तरमप्यस्तीति । एतेनेन्द्रौ भवौ शर्वावित्यादयः प्रयोगाः प्रत्युक्ताः ।

## मिलिक्लविक्षपिप्रभृतीनां धातुत्वं धातुगणस्यापरिसमाप्तेः ॥ २ ॥

मिलति विक्लवति क्षपयतीत्यादयः प्रयोगा दृश्यन्ते । तत्र मिलिक्लविक्षपिप्रभृतीनां कथं धातुत्वम्, गणपठितानामेव धातुसंज्ञाविधानात्? तत्राह— धातुगणस्यापरिसमाप्तेः । 'वर्धते धातुगणः' इति हि शब्दविद आचक्षते । तेनैषां गणपाठेऽनुमतिः, शिष्टप्रयोगादिति ।

## वलेरात्मनेपदमनित्यं ज्ञापकात् ॥ ३ ॥

वलेरनुदात्तेत्त्वादात्मनेपदं यत्, तदनित्यं दृश्यते—'लज्जालोलं वलन्ती' इत्यादिप्रयोगेषु; तत् कथमित्याह—ज्ञापकात् । किं पुनस्तज्ज्ञापकम्? चक्षिङो ङ्यनुबन्धकरणम् । चक्षिङ इकारेणैवानुदात्तेन सिद्ध-

---

एतत्समानयोगक्षेमाणि प्रयोगान्तराणि प्रत्याख्येयानीत्याह—एतेनेति ।

मिलिक्लवीति । 'भूवादयो धातवः' इति गणपठितानामेव धातुसंज्ञाविधानाद्धातुगणे मिलिप्रभृतीनामपाठात् कथं धातुत्वमित्याशङ्कापूर्वकं धातुत्वं समर्थयते— मिलति विक्लवति क्षपयतीति । धातुगणस्यापरिसमाप्तौ प्राचीनाचार्यवचनं प्रमाणयति—वर्धते धातुगण इति । प्रभृतिग्रहणाद्वीज्यान्दोलादयः ।

वलेरात्मनेपदमिति । 'अनुदात्तङित आत्मनेपदम्' इति वलेर्धातोरनुदात्तेत्त्वान्नित्यमात्मनेपदप्राप्तौ शिष्टप्रयोगेषु परस्मैपददर्शनं न तत्सिद्धये क्वचिदनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन समर्थयितुमाह— वलेरनुदात्तेत्त्वादिति । अनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यत्वे चक्षिङो ङित्करणं ज्ञापकमित्याह—चक्षिङो ङ्यनुबन्धकरणमिति । इकारेणैवेति । नन्वेवं 'गोः पादान्ते' इत्यतोऽन्तग्रहणानुवृत्तेरन्तेदित्त्वे सति 'इदितो नुम् धातोः' इति नुम् स्यात्,

मात्मनेपदम्; किमर्थं ङित्करणम्? तत्क्रियते अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्।

एतेन वेदिभर्त्सितर्जिप्रभृतयो व्याख्याताः। आवेदयति, भर्त्सयति, तर्जयतीत्यादीनां प्रयोगाणां दर्शनात्। अन्यत्राप्यनुदात्तनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन द्रष्टव्यमिति।

## क्षीयत इति कर्मकर्तरि ॥ ४ ॥

क्षीयत इति प्रयोगो दृश्यते; स कर्मकर्तरि द्रष्टव्यः। क्षीयतेरनात्मनेपदित्वात्।

## खिद्यत इति च ॥ ५ ॥

खिद्यत इति च प्रयोगो दृश्यते, सोऽपि कर्मकर्तर्येव द्रष्टव्यः, न कर्तरि, अदैवादिकत्वात् खिदेः[1]।

---

तर्हि 'चक्ष व्यक्तायां वाचि' इत्यकारान्तः पठ्यतेति भाव। उक्तमात्मनेपदस्यानित्यत्वं वेदिभर्त्सिप्रभृतिष्वपि द्रष्टव्यमित्याह— **एतेनेति**। 'आ गर्वादात्मनेपदिन' इत्यात्मनेपदित्वेनानुदात्तेत्त्वं लक्ष्यत इति भावः। अन्यथानुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्यानित्यताज्ञापने किमायातम्। न चैवमतिप्रसङ्गः, शिष्टप्रयोगमात्रविषयत्वाज्ज्ञापकस्य।

**क्षीयत इति**। क्षिणोतेः सौवादिकस्य श्नुप्रत्ययान्तत्वेन प्रसिद्धावपि क्षीयत इति कर्तरि शिष्टप्रयोगो दृश्यते; तस्योपपत्तिमाह— **स कर्मकर्तरि द्रष्टव्य इति**। क्षिणोतेः कर्मस्थभावकत्वात् कर्मवद्भावः।

**खिद्यत इति चेति**। चकारेण कर्मकर्तरीति समुच्चिनोति—**सोऽपीति**। खिदोऽकर्मकत्वादन्तर्भावितण्यर्थत्वे प्रयोज्यकर्मस्थभावकत्वात् कर्मवद्भावः। खिदेरनुदात्तेतः श्यनि कृते खिद्यत इति रूपं सिध्यतीति शङ्कां परिहरति— **अदैवादिकत्वादिति**।

---

1. वस्तुतस्तु पद्यतेरनन्तरं खिद्यतिरात्मनेपदी दिवादावुपलभ्यत एव। खिद्यत इति पाठान्तरम्। व्याख्याता तु खिदिमेव मन्यते। क्षीयत इति च दिवादेराकृतिगणत्वात्सिध्यतीति दीक्षितप्रभृतयः।

## मार्गेरात्मनेपदमलक्ष्म ॥ ६ ॥

चुरादौ 'मार्ग अन्वेषणे' इति पठ्यते 'आ धृषाद्वा' इति विकल्पितणिच्कः । तस्माद्यदात्मनेपदं दृश्यते—मार्गन्तां देहभारमिति; तत् अलक्ष्म अलक्षणम्, परस्मैपदित्वान्मार्गेः । तथा च शिष्टप्रयोगः— 'करकिसलयं धूत्वा धूत्वा विमार्गति वाससी ।'

## लोलमानादयश्चानशि ॥ ७ ॥

लोलमानो वेल्लमान इत्यादयश्चानशि द्रष्टव्याः । शानचस्त्वभावः, परस्मैपदित्वाद्धातूनामिति ।

## लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे ॥ ८ ॥

अस्त्ययं लभिः, यः प्राप्त्युपसर्जनां गतिमाह; अस्ति च यो गत्यु-

---

**मार्गेरिति** । चौरादिकस्य मार्गेः 'आ धृषाद्वा' इति णिचो वैकल्पिकत्वेन तदभावे सति परस्मैपदित्वान्मार्गतीति शिष्टप्रयोगदर्शनाच्च परस्मैपदे प्रयोक्तव्ये, यत्तु प्रयोगे कुत्रचिदात्मनेपदं दृश्यते— मार्गन्तामिति; तल्लक्षणहीनमित्याह— **चुरादाविति** । द्वयोरपि प्रयोगयोर्दर्शने कथमत्र व्यवस्थेति तत्राह— **तथा च शिष्टप्रयोग इति** ।

**लोलमानादय इति** । 'लोलमाननवमौक्तिकहारं वेल्लमानचिकुरश्लथमाल्यम् । स्विन्नवक्त्रमविकस्वरनेत्रं कौशलं विजयते कलकण्ठ्याः ॥' इत्यादिषु लोलमानादयः प्रयोगा दृश्यन्ते । परस्मैपदित्वादेतेषां शानजन्तत्वं विरुद्धम्; आत्मनेपदित्वाच्छानच इत्याशङ्कायां प्रकारान्तरेण साधुत्वं समर्थयते— **लोलमानो वेल्लमान इति** । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्यादिष्वर्थेषु धात्वधिकारे चानशो विधानादेते प्रयो[गाश्चा]नशि द्रष्टव्याः; न तु शानचि । अतो न विरोधः ।

**लभेरिति** । यद्यपि 'डुलभष् प्राप्तौ' इति प्राप्तिरेव लभेरर्थः, तथापि प्राप्तेर्गतिपूर्वकत्वात् प्राप्तिगत्योः कार्यकरणयोरभेदोपचारेण प्राप्त्युपसर्जनगत्यर्थत्वमपि लभेरङ्गीकृत्य प्रथमं तावत्पक्षद्वयं प्रस्तौति— **अस्त्ययमिति** । यः प्राप्त्यु-

पसर्जनां प्राप्तिमाहेति । अत्र पूर्वस्मिन् पक्षे गत्यर्थत्वाल्लभेर्णिचि अणौ यः कर्ता, तस्य गत्यादिसूत्रेण कर्मसंज्ञा ।

यथा— 'दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः ।'

द्वितीये तु पक्षे गत्यर्थत्वाभावाल्लभेर्णिच्यणौ कर्तुर्न कर्मसंज्ञा ।

यथा—

'सितं सितिम्ना सुतरां मुनेर्वपु-
विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः
शुचिस्मितां वाचमवोचदच्युतः ॥'

**तेमेशब्दौ निपातेषु ॥ ९ ॥**

त्वया मयेत्यस्मिन्नर्थे ते-मे-शब्दौ निपातेषु द्रष्टव्यौ ।

यथा—'श्रुतं ते वचनं तस्य' 'वेदानधीत इति नाधिगतं पुरा मे ।'

**तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात् ॥ १० ॥**

---

सर्जनां गतिमाह, सोऽयं लभिरस्ति; यश्च गत्युपसर्जनां प्राप्तिमाह अयमपि लभिरस्तीति योजना । विवक्षावशात् लभिरयं कदाचित् प्राधान्येन गतिमाह, कदाचित्तु प्राप्तिमित्यर्थः । तत्र प्रथमे पक्षे निर्विवादमणिकर्तुर्णिचि कर्मत्वमित्याह— **अत्र पूर्वस्मिन्निति** । द्वितीये तु गत्यर्थत्वाभावान्नास्त्यणिकर्तुः कर्मसंज्ञेत्याह— **द्वितीये त्विति** । ततश्च सितिम्नेत्यत्र 'कर्तृकरणयोस्तृतीया' इति प्रयोज्ये कर्तरि तृतीया ।

**तेमे इत्यादि** । अत्र 'तेमयावेकवचनस्य' इति युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोस्तेमयावादिष्टौ इति विभक्त्यन्तरस्थयोस्तयोरादेशाप्राप्तौ निपातेषु पाठात् तत्रापि प्रयोगसिद्धिरित्याह— **तेमेशब्दाविति** ।

**तिरस्कृत इति** । तिरस्कृतशब्दस्य परिभूतार्थे प्रयोगं दर्शयन्, तस्यानु-

तिरस्कृतशब्दः परिभूते दृश्यते— 'राज्ञा तिरस्कृतः' इति; स च न प्राप्नोति। तिरःशब्दस्य हि 'तिरोऽन्तर्धौ' इत्यन्तर्धौ गतिसंज्ञा। तस्यां च सत्याम् 'तिरसोऽन्यतरस्याम्' इति सकारः। तत्कथं तिरस्कृत इति परिभूते? आह— अन्तर्ध्युपचारादिति। परिभूतो ह्यन्तर्हितवद्भवति। मुख्यस्तु प्रयोगो यथा— 'लावण्यप्रसरतिरस्कृताङ्गलेखाम्।'

## नैकशब्दः सुप्सुपेति समासात्॥ ११॥

'अरण्यानीस्थानं फलनमितनैकद्रुममिदम्' इत्यादिषु नैकशब्दो दृश्यते; स च न सिध्यति। नञ्समासे हि 'नलोपो नञः' इति नलोपे 'तस्मान्नुडचि' इति नुडागमे सति अनेकमिति रूपं स्यात्। निरनुबन्धकस्य नशब्दस्य समासे लक्षणं नास्ति। तत् कथं नैकशब्द इत्यत्राह— सुप्सुपेति समासात्।

## मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पाठात्॥ १२॥

---

पपत्तिमुद्धाटयति— तिरस्कृतशब्द इत्यादिना। समाधत्ते— अन्तर्ध्युपचारादिति। मुख्यपूर्वकत्वाद्गौणस्य मुख्यं दर्शयति— मुख्यस्त्विति।

नञ्समासे हीति। 'नलोपो नञः' इति नकारलोपे सति, 'तस्मान्नुडचि' इति नुडागमे च कृते, अनेकमिति रूपं स्यात्, न तु नैकमिति। ननु न सिध्यति चेन्मास्तु नञ्समासः; प्रकारान्तरेण किं न स्यादित्यत आह— निरनुबन्धकस्येति। सुप्सुपेति। 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यतः सुबित्यनुवृत्तौ, 'सह सुपा' इति योगविभागात् सुबन्तं पदं सुबन्तेन सह समस्यत इति समासे नैकशब्दः सिद्धो भवतीत्यर्थः।

मधुपिपासुप्रभृतीनामिति। श्रितादिष्वग्रहणान्नात्र द्वितीयासमासः संभवति। नापि कृदन्तेन सह षष्ठीसमासः, 'न लोक—' इत्यादिसूत्रे उप्रत्यया-

'मधुपिपासुमधुव्रतसेवितं मुकुलजालमजृम्भत वीरुधाम्' इत्यादिषु मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पिपासुप्रभृतीनां पाठात्। 'श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्' इति द्वितीयासमासलक्षणं दर्शयति।

**त्रिवलीशब्दः सिद्धः संज्ञा चेत् ॥ १३ ॥**

त्रिवलीशब्दः सिद्धो यदि संज्ञा, 'दिक्संख्ये संज्ञायाम्' इति संज्ञायामेव समासविधानात्[1]।

**बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम् ॥ १४ ॥**

---

न्तेन योगे षष्ठीनिषेधात्। तत् कथमत्र समास इति चिन्तायां समासस्य गतिमाह— **गमिगाम्यादिष्विति**।

**त्रिवलीशब्द इति**। 'कोणस्त्रिवल्येव कुचावलाबूस्तस्यास्तु दण्डस्तनुरोमराजिः। हारोऽपि तन्त्रीरिति मन्मथस्य संगीतविद्यासरलस्य वीणा ॥' किमयं संज्ञा, असंज्ञा वा?। असंज्ञापक्षे त्रिवलीशब्दस्य 'तद्धितार्थोत्तरपदसमाहारे च' इति समासो वक्तव्यः; तत्तु न संघटते। तथाहि—न तावत् पञ्चकपाल इत्यादिवत् तद्धितार्थो विषयोऽस्ति। नापि पञ्चगवधन इत्यादिवदुत्तरपदं परम्। न चापि पञ्चपात्रमित्यादिवत् समाहारः, समाहारे हि तस्यैकत्वादेकवद्भावे सति 'स नपुंसकम्' इति नपुंसकत्वं स्यात्। तदत्रासंज्ञापक्षो नेष्ट इत्यभिसंधाय संज्ञापक्षमाश्रित्य समासमाह— **त्रिवलीशब्दः सिद्धो यदि संज्ञेति**। यदि त्रिवलीशब्दः संज्ञा भवति, तदा त्र्यवयवा वली त्रिवलीति विग्रहे 'दिक्संख्ये संज्ञायाम्' इति समासः सिध्यति।

**बिम्बाधर इति**। अत्र समासवृत्तिं संवेदयितुमभियुक्तप्रयोगं तावद्दर्श-

---

1. अत्र वदन्ति— यदि त्रिवलीशब्दे संज्ञात्वात् 'दिक्संख्ये—' इत्यनेन समासः, तर्हि सप्तर्षय इतिवत् बहुवचनेन भाव्यम्। यदि च त्र्यवयवा वली इति व्याख्यातृप्रदर्शितो विग्रहः, तर्हि शाकपार्थिवादित्वात्समास इति 'दिक्संख्ये' इति समास इति व्याहतम्। समासान्तरान्तर्भावाभिप्रायेण तु कथंचिन्मूलं नेयमिति।

'बिम्बाधरः पीयते' इति प्रयोगो दृश्यते; स च न युक्तः। अधरबिम्ब इति भवितव्यम्, 'उपमितं व्याघ्रादिभिः—' इति समासे सति। तत् कथं बिम्बाधर इति? आह— वृत्तौ मध्यमपदलोपिन्याम्। शाकपार्थिवादित्वात् समासे मध्यमपदलोपिनि सति बिम्बाकारोऽधरो बिम्बाधर इति। तेन बिम्बोष्ठशब्दोऽपि व्याख्यातः। अत्रापि पूर्ववद्वृत्तिः। शिष्टप्रयोगेषु चैष विधिः। तेन नातिप्रसङ्गः।

## आमूललोलादिषु वृत्तिर्विस्पष्टपटुवत् ॥ १६ ॥

'आमूललोलम्' 'आमूलसरसम्' इत्यादिषु वृत्तिर्विस्पष्टपटुवत् मयूरव्यंसकादित्वात्।

## न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः पूरणेन तद्धितान्तत्वात् ॥ १७ ॥

---

यति— **बिम्बाधरः पीयत इति**। प्रामाणिकप्रयोगदर्शनादयमसाधुरिति वक्तुमयुक्तमित्याशङ्क्याह— **स च न युक्त इति**। लक्षणानुगुणं प्रयोगं दर्शयन्नस्या अयुक्तत्वं दर्शयति— **अधरबिम्ब इति**। समाधत्ते— **वृत्तौ मध्यमपदलोपिन्यामिति**। उक्तामुपपत्तिमन्यत्राप्यनुगमयति— **तेनेति**। ननु तर्हि व्याघ्राकारः पुरुषो व्याघ्रपुरुष इत्यपि स्यादित्यतिप्रसङ्गं परिहरति— **शिष्टप्रयोगेषु चैष विधिरिति**।

**आमूललोलादिष्विति**। आमूलं लोलमिति विग्रहः। अत्र तत्पुरुषाधिकारे लक्षणदर्शनात् समासान्तरस्य चाप्रसक्तेः कथमामूललोलादिप्रयोगः सिध्यतीति चिन्तायाम् 'अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादि, द्रष्टव्यः' इति वचनात् विस्पष्टपटुशब्दवत् समाससिद्धिरित्याह— **आमूललोलमामूलसरसमिति**।

**न धान्यषष्ठादिष्विति**। धान्यानां षष्ठमुञ्छानां षष्ठमित्यत्र 'पूरणगुणसुहितार्थ—' इति सूत्रेण पूरणप्रत्ययान्तेन समासनिषेधः क्रियते; स च न भवतीत्याह—**धान्यषष्ठमिति**। तत्र हेतुमाह—**तद्धितेति**। षष्ठशब्दस्य तद्धि-

'धान्यषष्ठम्' 'तान्युञ्छषष्ठाङ्कितसैकतानि' इत्यादिषु न षष्ठीसमासप्रतिषेधः पूरणेन पूरणप्रत्ययान्तेन तद्धितान्तत्वात् षष्ठो भागः षष्ठ इति; 'पूरणाद्भागे तीयादन्' 'षष्ठाष्टमाभ्यां ञ च' इत्यन्विधानात्।

## पत्रपीतिमादिषु गुणवचनेन ॥ १८ ॥

'पत्रपीतिमा,' 'पक्ष्मालीपिङ्गलिम्नः' इत्यादिषु षष्ठीसमासप्रतिषेधो गुणवचनेन प्राप्तः, बालिश्यात्तु न कृतः।

## अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ॥ १९ ॥

अवर्ज्यो न वर्जनीयो व्यधिकरणो बहुव्रीहिः। जन्मादि उत्तरपदं यस्य स जन्माद्युत्तरपदः।

यथा— 'सच्छास्त्रजन्मा हि विवेकलाभः' 'कान्तवृत्तयः प्राणाः' इति।

---

तान्तत्वादित्यर्थः। कः पुनरत्र पूरणप्रत्ययव्यतिरेकेण तद्धित इत्याकाङ्क्षायां तद्धितं दर्शयति—**षष्ठो भाग इति**। 'पूरणाद्भागे तीयादन्' इत्यनुवृत्तौ 'षष्ठाष्टमाभ्यां ञ च' इत्यन्विधानादन्यतद्धितान्तत्वमित्यर्थः।

**पत्रपीतिमादिष्विति**। अत्र 'पूरणगुण' इत्यादिसूत्रेण गुणवाचिना षष्ठीसमासप्रतिषेधः प्राप्तः। स तु मौढ्यान्न कृतः। अतः पत्रपीतिमादयो न युक्ता इत्याह— **'पत्रपीतिमा' 'पक्ष्मालीपिङ्गलिम्नः' इति**। 'वर्त्तमानसामीप्ये' इति ज्ञापकात् पत्रपीतिमादयः सिध्यन्तीति केचित्। येषां तु मतम्— गुणः संबन्धित्वाद्गुणिनमाक्षिपति। तेन गुणेन गुणिनः षष्ठीसमासनिषेधः। न च वर्तमानः सामीप्ये गुणी। भूतभविष्यतोरेव तद्गुणित्वादिति; तेषां मते 'उत्तरपदार्थप्राधान्ये' इति ज्ञापकादनित्यः षष्ठीसमासप्रतिषेध इति केचिदाचक्षते।

**अवर्ज्य इति**। 'बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्' इति वचनात् व्यधिकरणस्य बहुव्रीहेरसिद्धौ क्वचिद्विषये तत्प्रसिद्धिमाह— **अवर्ज्य इति**। सच्छास्त्राज्जन्म यस्य स सच्छास्त्रजन्मा, कान्ते प्रिये वृत्तिर्येषां ते कान्तवृत्तय इति व्यधिकरणत्वम्। यत्र गमकत्वम्, तत्रेदं वेदितव्यम्।

## हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ॥ २० ॥

हस्ताग्रम्, अग्रहस्तः, पुष्पाग्रम्, अग्रपुष्पम्, इत्यादयः प्रयोगाः कथम्; आहिताग्न्यादिष्वपाठात्, पाठे वा तदनियमः स्यात्? आह— गुणगुणिनोर्भेदाभेदात्। तत्र भेदात् हस्ताग्रादयः। अभेदात् अग्रहस्तादयः।

## पूर्वनिपातेऽपभ्रंशो रक्ष्यः ॥ २१ ॥

काष्ठतृणं तृणकाष्ठमिति यदृच्छया पूर्वनिपातं कुर्वन्ति। तत्रापभ्रंशो रक्ष्यः परिहरणीयः। अनित्यत्वज्ञापनं तु न सर्वविषयमिति।

## निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात् ॥ २२ ॥

---

हस्ताग्रेति। अत्र गुणशब्देन परार्थत्वसादृश्यादवयवो लक्ष्यते। तथा च गुणगुणिनाविहावयवावयविनौ। तयोर्भेदविवक्षायां हस्ताग्रादयः। तदा षष्ठीसमासः। अभेदविवक्षायां त्वग्रहस्तादयः। तदा अभेदोपचारेऽपि प्रवृत्तिनिमित्तभेदाद्विशेषणसमासः॥

**पूर्वनिपात इति**। 'लघ्वक्षरं पूर्वं निपतति' इति वार्तिककारवचनेन द्वन्द्वे पूर्वनिपातविधानात्तृणकाष्ठमिति वक्तव्ये काष्ठतृणमिति क्वचित् केनचित् प्रयुक्तम्। तत्र पूर्वनिपाते अपभ्रशः शास्त्रमर्यादातिक्रमः। स रक्ष्यः परिहरणीयः, तथा न प्रयोक्तव्यमिति तात्पर्यम्। 'कुमारशीर्षयोः' इति ज्ञापकात् पूर्वनिपातव्यत्यासो भविष्यतीति तत्राह— **अनित्यत्वज्ञापनं त्विति**। **न सर्वेति**। 'प्राप्तस्य चाबाधा' इति वचनाच्छिष्टप्रयुक्तद्वन्द्वविषयमेवेति भावः।

**निपातेनापीति**। 'ब्राह्मणं देवदत्त इति मन्यते' इत्यादौ 'अनभिहिते' इत्यधिकारात् तिङ्कृत्तद्धितसमासैरनभिहिते कारके कर्मणि द्वितीयया भवितव्यमित्याशङ्कायामाह— **निपातेनापीति**। तत्र हेतुमाह— **परिगणनस्येति**। भगवता वार्तिककारेण प्रायिकाभिप्रायेण 'तिङ्कृत्तद्धितसमासैः' इति परिगणनं कृत-

'अनभिहिते' इत्यत्र सूत्रे 'तिङ्कृत्तद्धितसमासैः' इति परिगणनं कृतम्। तस्य प्रायिकत्वान्निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिर्भवति।

यथा— 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' 'पण्डितं मूर्खं इति मन्यते' इति।

## शक्यमिति रूपं कर्माभिधायां लिङ्गवचनस्यापि सामान्योपक्रमात्॥ २३॥

शकेः 'शकिसहोश्च' इति कर्मणि यति सति शक्यमिति रूपं भवति कर्माभिधायां कर्मवचने। लिङ्गवचनस्यापि सामान्योपक्रमात् विशेषानपेक्षायामिति।

---

म्।·ततश्चैवविधाः प्रयोगाः सिद्धा इति दर्शयति— **विषवृक्ष इति**। अत्र संवर्धनच्छेदनक्रिययोः सकर्मकत्वेन कर्माकाङ्क्षायां न कर्मविभक्तिर्भवति, विधेयायुक्तत्वाभिधायिना असांप्रतमिति निपातेनाभिहितत्वात्। नन्वसांप्रतपदस्य तद्धितान्तत्वात् तेनैवाभिहिते न भवत्येव कर्मविभक्तिः। अतो नेदमुदाहरणमिति न चोदनीयम्; 'युक्ते काले च सांप्रतम्' इत्यभिधानादतद्धितान्त एवायं निपातः। तद्धितान्तत्वे वा तस्यानन्यार्थत्वान्न तेनाभिधानमिति भावः। शब्दशक्तिस्वाभाव्यादस्याभिधायकत्वमिति द्रष्टव्यम्। **मूर्ख इति**। अत्र समुदायस्य कर्मत्वेऽपि 'अर्थवत्समुदायानां समासग्रहणं नियमार्थम्' इति वाक्यान्न विभक्त्युत्पत्तिः।

'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः' इत्यादयः प्रयोगा दृश्यन्ते। शकेः कृत्यप्रत्यये शक्यमिति रूपम्। 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मार्थे विहितस्य तस्य कर्माभिधायां विशेष्यवल्लिङ्गवचनाभ्यां भवितव्यमिति प्राप्ते प्राह— **शक्यमिति रूपमिति**। कर्माभिधायामपि शक्यमिति रूपं सिद्धम्। तत्र हेतुमाह— **लिङ्गवचनस्यापीति**। लिङ्गं च वचनं च लिङ्गवचनम्। तस्य सामान्योपक्रमाल्लिङ्गसामान्यं नपुंसकम्, वचनसामान्यम् एकत्वम, तयोरुपक्रमात् विशेषनैरपेक्ष्येण लिङ्गवचनसामान्यस्य विवक्षणादित्यर्थः। उदाहृत्य दर्शयति—

यथा—

'शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः ॥'

न चैकान्तिकः सामान्योपक्रमः । तेन 'शक्या भङ्क्तुं झटिति बिसिनीकंदवच्चन्द्रपादाः' इत्यपि भवति ।

## हानिवदाधिक्यमप्यङ्गानां विकारः ॥ २४ ॥

'येनाङ्गविकारः' इत्यत्र सूत्रे यथा अङ्गानां हानिः, तथा आधिक्यमपि विकारः ।

यथा 'अक्ष्णा काणः' इति भवति, तथा 'मुखेन त्रिलोचनः' इत्यपि भवति ।

## न कृमिकीटानामित्येकवद्भावप्रसङ्गात् ॥ २५ ॥

'आयुषः कृमिकीटानामलंकरणमल्पता' इत्यत्र कृमिकीटानामिति प्रयोगो न युक्तः, 'क्षुद्रजन्तवः' इत्येकवद्भावप्रसङ्गात् । न च मध्यमपदलोपी समासो युक्तः, तस्य असर्वविषयत्वात् ।

## न खरोष्ट्रावुष्ट्रखरमिति पाठात् ॥ २६ ॥

---

यथेति । ऐकान्तिको नियतः ।

हानिवदिति । मुखेन त्रिलोचन इत्यत्र तृतीयाप्राप्तावनुशासनस्यादर्शनात् कथमत्र तृतीयेति चिन्तायामाह— येनाङ्गविकार इति । हानिः न्यूनता । यथा अङ्गानां न्यूनता विकारः तथा आधिक्यमपि विकार एव, अतो 'येनाङ्गविकारः' इति तृतीया ।

न कृमीति । क्षुद्रजन्तुवाचिनां द्वन्द्वसमासे एकवद्भावविधानात् बहुवचनान्तप्रयोगो न साधुरित्याह— आयुष इति । ननु मुखसहिता नासिका मुखनासिकेतिवत् मध्यमपदलोपी समासः स्यादित्यपि न वक्तुं युक्तम् । तस्य असार्वत्रिकत्वादिति समर्थयते— न चेति ।

न खरोष्ट्राविति । गवाश्वादिगणे उष्ट्रखरमिति निपातितत्वात् खरोष्ट्रा-

'खरोष्ट्रौ वाहनं येषाम्' इत्यत्र खरोष्ट्राविति प्रयोगो न युक्तः, गवाश्वप्रभृतिषु 'उष्ट्रखरम्' इति पाठात् ।

## आसेत्यसतेः ॥ २७ ॥

'लावण्यमुत्पाद्य इवास यत्नः' इत्यत्र आस इत्यसतेर्धातोः 'अस गतिदीप्त्यादानेषु' इत्यस्य प्रयोगः; न अस्तेः, भूभावविधानात् ।

## युध्येदिति युधः क्यचि ॥ २८ ॥

'यो भर्तृपिण्डस्य कृते न युध्येत्' इति प्रयोगः; स चायुक्तः, युधेरात्मनेपदित्वात् । तत् कथं युध्येदित्यत्राह— युधः क्यचि । युधमात्मन इच्छेत् युध्येदिति ।

## विरलायमानादिषु क्यङ् निरूप्यः ॥ २९ ॥

'विरलायमाने मलयमारुते' इत्यादिषु क्यङ् निरूप्यः, भृशादिष्वपाठात् । नापि क्यष्, लोहितादिष्वपाठात् ।

## अहेतौ हन्तेर्णिच् चुरादिपाठात् ॥ ३० ॥

विति व्यत्यासेन प्रयोगोऽनुपपन्न इत्याह— **खरोष्ट्रौ वाहनमिति** ।

**आसेति** । 'अस्तेर्भूः' इत्यार्धधातुके भूभावविधानात् कथमासेति प्रयोग इति प्राप्ते, असतेर्धातोर्लिटि रूपमासेति, न पुनरस्तेरित्याह— **लावण्य इति** ।

**युध्येदिति** । युधेरात्मनेपदिनः परस्मैपदं दृश्यते । तस्य शिष्टप्रयोगस्य साधुत्वं दर्शयितुमाह— **य इति** । युध्शब्दात् 'सुप आत्मनः क्यच्' इति क्यच्प्रत्यये कृते सति लिङि युध्येदिति सिध्यतीत्याह— **युधमिति** ।

**विरलायमानादिष्विति** । क्यङ्क्यषोरप्राप्तत्वात् प्रत्याचष्टे— **विरलायमान इति** ।

**अहेताविति** । घातयित्वेत्यत्र अहेतुकर्तृभावेऽपि प्रयोगो दृश्यते । स

'घातयित्वा दशास्यम्' इत्यत्राहेतौ णिच् दृश्यते; स कथमित्यत आह— चुरादिपाठात्, चुरादिषु 'चट स्फुट भेदे' 'घट संघाते' 'हन्त्यर्थाश्च' इति पाठात्।

## अनुचरीति चरेष्टित्वात् ॥ ३१ ॥

'अनुचरी प्रियतमा मदालसा' इत्यत्र अनुचरीति न युक्तः, ईकाराभावात्। तत् कथम्? आह— चरेष्टित्वात्। पचादिषु चरडिति पठ्यते।

## केसरालमित्यलतेरणि ॥ ३२ ।

'केसरालं शिलीध्रम्' इत्यत्र केसरालमिति कथम्? आह— अलतेरणि। 'अल भूषणपर्याप्तिवारणेषु' इत्यस्माद्धातोः केसरशब्दे कर्मण्युपपदे 'कर्मण्यण्' 'इत्यनेन अणि सति केसरालमिति सिध्यति।

## पत्रलमिति लातेः के ॥ ३३ ॥

'पत्रलं वनमिदं विराजते' इत्यत्र पत्रलमिति कथम्? आह— लातेः के। 'ला आदाने' इत्येतस्माद्धातोरादानार्थात् पत्रशब्दे कर्म-

---

च चुरादिपाठात् स्वार्थण्यन्तः साधुरित्याह— **घातयित्वेति**।

**अनुचरीति**। आक्षेपपूर्वकमनुचरीति पदस्य साधुत्वं समर्थयते— **अनुचरी प्रियतमेति**। **ईकाराभावादिति**। पचाद्यजन्तत्वेन ङीप्प्राप्तेरभावादित्यर्थः।

केसरशब्दस्य प्राण्यङ्गवाचित्वाकारान्तत्वयोरभावात् 'प्राणिस्थादातो लजन्यतरस्याम्' इति लजभावात् कथं केसरालमिति रूपे, तदुपपत्तिं वक्तुमाह— **केसरालमिति**। वृत्तिः स्पष्टार्था।

पत्रशब्दः सिध्मादिषु न पठ्यते इति 'सिध्मादिभ्यश्च' इति नास्ति लच्प्रत्यय इति कथं पत्रलमिति चिन्तायां साधुत्वं समर्थयते— **पत्रलमिति**। पत्राणि लाति आदत्त इति विग्रहे 'आतोऽनुपसर्गे कः' इति कप्रत्यये सति उप-

ण्युपपदे, 'आतोऽनुपसर्गे कः' इति कप्रत्यये सतीति।

**महीध्रादयो मूलविभुजादिदर्शनात् ॥ ३४ ॥**

महीध्रधरणीध्रादयः शब्दाः, मूलविभुजादिदर्शनात् कप्रत्यये सतीति। महीं धरतीति महीध्र इति। एवमादयोऽन्येऽपि द्रष्टव्याः।

**ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ॥ ३५ ॥**

ब्रह्मादिषूपपदेषु हन्तेः क्विब्विधौ 'ब्रह्मभ्रूणवृत्रेषु—' इत्यत्र नियमात् ब्रह्मादिष्वेव, हन्तेरेव, क्विबेव, भूतकाल एवेति चतुर्विधश्चात्र नियम इति नियमात् अरिहा रिपुहा इत्येवमादीनामसिद्धिः।

**ब्रह्मविदादयः कृदन्तवृत्त्या ॥ ३६ ॥**

ब्रह्मवित्, वृत्रभिदित्यादयः प्रयोगा न युक्ताः। 'ब्रह्मभ्रूण—' इत्यत्र ब्रह्मादिषु हन्तेरेव इति नियमात्। आह— कृदन्तवृत्त्या। वेत्तीति वित्। भिनत्तीति भित्। 'क्विप् च' इति क्विप्। ततः कृदन्तैर्वि-

---

पदसमासे कृते पत्रलमिति सिद्धमित्याह—**पत्रलं वनमिति।**

**महीध्रादय इति।** महीं धरतीति विग्रहे मूलविभुजादेराकृतिगणत्वात् कप्रत्यये कृते कित्त्वेन गुणाभावाद्यणादेशे सति महीध्रादयः सिद्धा इत्याह—**महीध्रधरणीध्रादय इति।**

**ब्रह्मादिष्विति।** 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इत्यत्र ब्रह्मादिष्वेवोपपदेषु भूत एव काले हन्तेरेव धातोः क्विबेव प्रत्ययो भवतीत्युपपदकालधातुप्रत्ययविषयस्य चतुर्धानियमस्यानुशिष्टत्वात् अरिहेत्यादीनामसिद्धिरित्याह— **ब्रह्मादिषूपपदेष्विति।**

ननु तर्हि चतुर्धानियमाश्रयणे ब्रह्मविदादीनां का गतिरिति प्राप्ते, प्राह—**ब्रह्मवित् वृत्रभिदिति।** उपपदकालनैरपेक्ष्येण क्विपि सति समासान्तराश्रयणेन ब्रह्मविदादयः सिध्यन्तीति व्याचष्टे— **वेत्तीति।** वेत्तीति वित्, भिनत्तीति भिदिति

दादिभिः सह ब्रह्मादीनां षष्ठीसमास इति ।

**तैर्महीधरादयो व्याख्याताः ॥ ३७ ॥**

तैः ब्रह्मविदादिभिर्महीधरादयो व्याख्याताः । धरतीति धरः, मह्या धरो महीधरः । एवं गङ्गाधरादयः ।

**भिदुरादयः कर्मकर्तरि कर्तरि च ॥ ३८ ॥**

'भिदुरं काष्ठम्' 'भिदुरं तमः' 'तिमिरभिदुरं व्योम्नः शृङ्गम्' इति, 'छिदुरातपो दिवसः' 'मत्सरच्छिदुरं प्रेम' 'भङ्गुरा प्रीतिः' 'मातङ्गं मानभङ्गुरम्' इत्यादयोऽपि प्रयोगा दृश्यन्ते; ते कथमित्यत्राह— कर्मकर्तरि कर्तरि च । 'कर्मकर्तरि चायमिष्यते' इत्यत्र चकारः 'कर्तरि च' इत्यस्य समुच्चयार्थः ।

**गुणविस्तरादयश्चिन्त्याः ॥ ३९ ॥**

गुणविस्तरः, व्याक्षेपविस्तर इत्यादयः प्रयोगाश्चिन्त्याः, 'प्रथने वावशब्दे' इति घञ्प्रसङ्गात् ।

---

व्युत्पत्तिसिद्धेन कृदन्तेन सह षष्ठीसमासे सति ब्रह्मविदादीनां साधुत्वमित्यर्थः ।

उक्तामेतां युक्तिमन्यत्रापि योजयति— **तैरिति** । अत्र 'कर्मण्यण्' इति सूत्रेण कर्मण्युपपदे धातोरण्विधानान्महीधरादीनामसाधुत्वशङ्कायामिहाप्युपपदनैरपेक्ष्यषष्ठीसमासाश्रयणाभ्यां साधुत्वमस्तीति व्याचष्टे— **धरतीति धर इति** ।

**भिदुरादय इति** । 'कर्मकर्तरि चायमिष्यते' इत्यत्र चकार प्रयुक्तवता तत्रभवता भाष्यकृता कर्तर्यपि प्रयोगोऽभ्यनुज्ञात इति भिदुरादयः शब्दाः कर्मकर्तरि, कर्तरि च प्रयोक्तव्या इत्याह— **भिदुरं काष्ठमिति** ।

**गुणविस्तरादय इति** । 'प्रथने वावशब्दे' इति विपूर्वात्स्तृणातेरशब्दविषये प्रथने घञ्विधानाद्गुणविस्तार इत्येव प्रयोक्तव्यम्, न तु गुणविस्तर इतीत्याह— **प्रथन इति** ।

## अवतरापचायशब्दयोर्दीर्घव्यत्यासो बालानाम् ॥ ४० ॥

अवतरशब्दस्य, अपचायशब्दस्य च दीर्घत्वह्रस्वत्वव्यत्यासो बालानां बालिशानां प्रयोगेष्विति । ते ह्यवतरणमवतार इति प्रयुञ्जते— मारुतावतार इति; स ह्ययुक्तः, भावे तरतेरब्विधानात् । अपचायमपचय इति प्रयुञ्जते—पुष्पापचय इति । अत्र 'हस्तादाने चेरस्तेये' इति घञ् प्राप्त इति ।

## शोभेति निपातनात् ॥ ४१ ॥

शोभेत्ययं शब्दः साधुः, निपातनात् 'शुभ शुम्भ शोभार्थौ' इति । शुभेर्भिदादेराकृतिगणत्वादङ् सिद्ध एव । गुणप्रतिषेधाभावस्तु निपात्यत इति । शोभार्थावित्यत्रैकदेशे किं शोभा, आहोस्विच्छोभ इति विशेषावगतिराचार्यपरम्परोपदेशादिति ।

## अविधौ गुरोः स्त्रियां बहुलं विवक्षा ॥ ४२ ॥

अविधौ 'गुरोश्च हलः' इति अविधाने स्त्रियां बहुलं विवक्षा क्वचि-

दीर्घव्यत्यास इति । दीर्घस्य स्थानात् प्रच्याव्य अस्थाने करण व्यत्यासः । बालानां विमर्शविधुराणां भवतीति शेष. । तमेव व्यत्यासं दर्शयति— ते हीति । अब्विधानादिति । 'अवे तृस्त्रोर्घञ्' इति करणाधिकरणयोरेव घञ्विधानात् तरतेः 'ऋदोरप्' इति भावे अप्प्रत्यय एव भवतीत्यर्थः । अपचायमिति । 'हस्तादाने चेरस्तेये' इति हस्तेन आदानेऽभिधेये चिनोतेर्घञ्विधानादप्प्रत्ययो न प्राप्नोतीत्यर्थः ।

शोभेति । 'षिद्भिदादिभ्योऽङ्' इति शुभेर्धातोर्भिदादिषु पाठादङ्प्रत्यये सति ङित्करणेन गुणप्रतिषेधे प्रसक्ते निपातनाद्गुणसिद्धिरित्याह—**शोभेत्ययं शब्द इति** ।

अविधाविति । बहुलग्रहणस्य विवक्षितमर्थमाह— **क्वचिद्विवक्षा क्वचि-**

द्विवक्षा, क्वचिदविवक्षा, क्वचिदुभयमिति ।

विवक्षा यथा— ईहा लज्जेति । अविवक्षा यथा— आतङ्क इति । विवक्षाविवक्षे यथा— बाधा बाधः, ऊहा ऊहः, व्रीडा व्रीड इति ।

## व्यवसितादिषु क्तः कर्तरि चकारात् ॥ ४३ ॥

व्यवसितः प्रतिपन्न इत्यादिषु भावकर्मविहितोऽपि क्तः कर्तरि । गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् । भावकर्मानुकर्षणार्थत्वं चकारस्येति चेत्, आवृत्तिः कर्तव्या ।

## आहेति भूतेऽन्यणलन्तभ्रमाद्ब्रुवो लटि ॥ ४४ ॥

'ब्रुवः पञ्चानाम्' इत्यादिना आहेति लट् व्युत्पादितः; स भूते प्रयुक्तः 'इत्याह भगवान् प्रभुः' इति । अन्यस्य भूतकालाभिधायिनो

---

दविवक्षा, क्वचिदुभयमिति । आतङ्क इत्यादिषु स्त्रीत्वस्य अविवक्षितत्वात् घञेव भवति ।

**व्यवसितादिष्विति** । व्यवसितः, प्रतिपन्न इत्यादिषु कर्तरि क्तप्रत्ययो न प्राप्नोति, सकर्मकेभ्यो धातुभ्यः कर्मणि क्तप्रत्ययविधानात्, गत्यर्थादिसूत्रेण चाप्राप्तेरिति प्राप्ते गत्यर्थादिसूत्रे चकारेणानुक्तसमुच्चयार्थेन व्यवस्यतिप्रभृतयः समुच्चीयन्त इत्याह— **व्यवसित इति** । ननु भावकर्मणोरनुकर्षणार्थश्चकारः कथमन्यदप्यनुक्तं समुच्चिनुयादिति शङ्कते— **भावकर्मेति** । समाधत्ते— **आवृत्तिरिति** । चकारस्यावृत्तौ भावकर्मणोरनुकर्षणार्थ एकश्चकारः, अन्यः पुनरनुक्तसमुच्चयार्थ इति येन केनाप्युपायेन शिष्टप्रयोगस्य गतिः कल्पनीयेत्यर्थः ।

**आहेति** । 'किमिच्छसीति स्फुटमाह वासवः' इत्यादिषु आहेति भूते प्रयुज्यते । स च प्रयोगोऽनुपपन्नः 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति ब्रुवो लटि णलाद्यादेशपञ्चकविधानात् । **अन्यणलन्तेति** । लिटि विहितो यो णल् तदन्तत्वभ्रान्तिमूलोऽयं प्रयोग इत्यर्थः । आहेत्यव्ययमिति केचित्समा-

लिटि णलन्तस्य भ्रमात्। निपुणाश्चैवं प्रयुञ्जते— 'आह स्म स्मितमधुराक्षरां गिरम्' इति। 'अनुकरोति भगवतो नारायणस्य' इत्यत्रापि, मन्ये, स्मशब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखित इति।

## शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ॥ ४५ ॥

'उपस्रोतःस्वस्थस्थितमहिषशृङ्गाग्रशबलाः स्रवन्तीनां जाताः प्रमुदितविहङ्गास्तटभुवः' 'भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः' इत्यादिषु स्त्रियां टापोऽप्राप्तिः 'अन्यतो ङीष्' इति ङीष्विधानात्। तेन शबली कल्माषीति भवति।

## प्राणिनि नीलेति चिन्त्यम् ॥ ४६ ॥

'कुवलयदलनीला कोकिला बालचूते' इत्यादिषु नीलेति चिन्त्यम्। कोकिला नीलीति भवितव्यम्, नीलशब्दात् 'जानपद—' इत्यादिसूत्रेण 'प्राणिनि च' इति ङीष्विधानात्।

## मनुष्यजातेर्विवक्षाविवक्षे ॥ ४७ ॥

'इतो मनुष्यजातेः' 'ऊङुतः' इत्यत्र च मनुष्यजातेर्विवक्षा, अविवक्षा च लक्ष्यानुसारतः।

---

दधते। शिष्टप्रयोगशैलीं दर्शयति— **निपुणाश्चेति**। 'लट् स्मे' इति लटो विधानात्। प्रसङ्गादन्यत्रापि भूतार्थे लट्प्रयोगस्योपपत्तिमाह—**अनुकरोतीति**।

**शबलादिभ्य इति** 'अन्यतो ङीष्' इति ङीष्विधानाच्छबलकल्माषादिभ्यः स्त्रियां टाप्प्रत्ययस्याप्राप्तिरिति तथा प्रयोगं प्रदर्श्य प्रतिषेधति— **उपस्रोत इति**।

**प्राणिनीति**। जानपदादिसूत्रे वृत्तिकारेण 'नीलादोषधौ' 'प्राणिनि च' इति विषयव्यवस्थापनात् प्राणिनि विषये नीलशब्दात् ङीष्प्रत्ययः प्राप्तः न तु टाप्। अत. प्राणिनि नीलेति न प्रयोक्तव्यमित्याह— **कुवलयेति**।

**मनुष्यजातेरिति**। निम्ननाभिसुतनुप्रभृतिषु यदि मनुष्यजातित्वमभ्युपेयते, तदा 'इतो मनुष्यजातेः' 'ऊङुतः' इति ङीषूङ्प्रत्यययोः प्राप्तौ निम्ननाभेः, सुतनो

'मन्दरस्य मदिराक्षि पार्श्वतो
निम्ननाभि न भवन्ति निम्नगाः ।
वासु वासुकिविकर्षणोद्भवा
भामिनीह पदवी विभाव्यते ॥'

अत्र मनुष्यजातेर्विवक्षायाम् 'इतो मनुष्यजातेः' इति ङीषि सति 'अम्बार्थनद्योर्ह्रस्वः' इति संबुद्धौ ह्रस्वत्वं सिध्यति । नाभिशब्दात्पुनः 'इतश्च प्राण्यङ्गात्' इतीकारे कृते निम्ननाभीके इति स्यात् ।

'हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥'

अत्र निमग्ननाभेरिति मनुष्यजातेरविवक्षेति ङीष् न कृतः ।

'सुतनु जहिहि मानं पश्य पादानतं माम्' इत्यत्र मनुष्यजातेर्विवक्षेति सुतनुशब्दात् 'ऊङुतः' इत्यूङि सति ह्रस्वत्वे सुतन्विति सिध्यति ।

रित्यादयः प्रयोगा न सिध्येयुः । यदि नाभ्युपेयते, तर्हि संबुद्धौ निम्ननाभि, सुतनु इत्यादयः प्रयोगा न सिद्धाः स्युः । ततः कथं प्रयोगव्यवस्थेति विचारणायामुभयत्र साधुत्वं व्यवस्थापयति— **इतो मधुष्यजातेरिति** । 'वक्तुर्विवक्षितपूर्विका हि शब्दप्रवृत्तिः' इति न्यायेन मनुष्यजातेर्विद्यमानाया अपि क्वचिद्विवक्षा, क्वचिदविवक्षा चेति लक्ष्यानुसारेणोत्प्रेक्षणीयेति प्रयोगदर्शनपूर्वकं विवक्षाविवक्षे व्युत्पादयति— **मन्दरस्येति** । अत्र मनुष्यजातिविवक्षायां रूपसिद्धिं दर्शयति— **इतो मनुष्यजातेरिति** । ननु 'इतश्च प्राण्यङ्गवाचिनो वा वक्तव्यः' इति नाभिशब्दादीकारे कृते 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वे च कृते निम्ननाभीति संबुद्धिः सिध्यति; किमनेन यत्नेनेति चेत् तत्राह — **नाभिशब्दादिति** । निम्ननाभीत्यत्र बहुव्रीहिसमासे 'नद्यृतश्च' इति कपा समासान्तेन 'न कपि' इति ह्रस्वत्वप्रतिषेधेन च भवितव्यम् । ततश्च निम्ननाभीके इति स्यात्, न तु निम्ननाभि इति । इतो मनुष्यजातेः क्वचिदविवक्षां दर्शयति— **हृतोष्ठरागैरिति** । उक्तन्यायेन सुतनुशब्दादौ विवक्षाविवक्षे दर्शयति— **सुतनु जहिहीति** ।

'वरतनुरथ वास्मिन्नेव दृष्टा त्वया मे ।' अत्र मनुष्यजातेरविवक्षेत्यूङ् न कृतः ।

## ऊकारान्तादप्यूङ् प्रवृत्तेः ॥ ४८ ॥

उत ऊङ् विहित ऊकारान्तादपि क्वचित् भवति । आचार्यप्रवृत्तेः । क्वासौ प्रवृत्तिः ? 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति । अलाबूः, कर्कन्धूरित्युदाहरणम् । तेन 'सुभ्रु किं संभ्रमेण' । अत्र सुभ्रुशब्दः ऊङि सिद्धो भवति । ऊङि त्वसति सुभ्रूरिति स्यात् ।

## कार्तिकीय इति ठञ् दुर्धरः ॥ ४९ ॥

'कार्तिकीयो नभस्वान्' इत्यत्र 'कालाट्ठञ्' इति ठञ् दुर्धरः । ठञ् भवन् दुःखेन ध्रियत इति ।

## शार्वरमिति च ॥ ५० ॥

शार्वरं तम इत्यत्र च 'कालाट्ठञ्' इति ठञ् दुर्धरः ।

---

ऊकान्तादपीति । यद्यपि 'ऊङुत' इत्यत्र तपरकरणमुकारान्तादूङ्विधानार्थं कृतम्, तथाप्याचार्यवचनसामर्थ्यादूकारान्तादप्यूङ् प्रवर्तत इत्याह— उत ऊङ् विहित इति । प्रश्नपूर्वकं प्रवृत्तिं दर्शयति— क्वासौ प्रवृत्तिरिति । प्रवृत्तिरारम्भः । अलाबू, कर्कन्धूरित्युदाहरणसिद्ध्यर्थम् 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूकारान्तादप्यूङ्प्रत्ययारम्भात्तपरकरणमविवक्षितमिति ज्ञायते । ननु यदेतदूकारान्तादूङ्विधानं तत् पिष्टपेषणप्रायमिति शङ्कां परिहरति— तेनेति । सुभ्रूशब्दादपि मनुष्यजातिविवक्षायामूङ्प्रत्यये नदीसंज्ञायां संबुद्धौ ह्रस्वो भवतीति दर्शयति— अत्र सुभ्रुशब्द इति ।

कार्तिकीय इति । अत्र कार्तिके भव इति भवार्थत्वं वक्तुं युक्तम्; तथात्वे 'कालाट्ठञ्' इति शैषिकेष्वर्थेषु विधीयमानष्ठञ् दुर्निवारतया प्राप्नोति । अतः कार्तिकीय इति न सिध्यतीत्याह-- अत्रेति । दुर्धर इति पदार्थमाह— दुःखेति । दुर्निरोध इत्यर्थः ।

शार्वरमिति । अत्रापि ठञो दुर्धरत्वेन शार्वरमिति न सिध्यतीत्याह— शार्वरं तम इति ।

## शाश्वतमिति प्रयुक्तेः ॥ ५१ ॥

शाश्वतं ज्योतिरित्यत्र शाश्वतमिति न सिध्यति, 'कालाट्ठञ्' इति ठञ्प्रसङ्गात् । 'येषां च विरोधः शाश्वतिकः' इति सूत्रकारस्यापि प्रयोगः । आह— प्रयुक्तेः । 'शाश्वते प्रतिषेधः' इति प्रयोगात् शाश्वतमिति भवति ।

## राजवंश्यादयः साध्वर्थे यति भवन्ति ॥ ५२ ॥

राजवंश्याः, सूर्यवंश्या इत्यादयः शब्दाः 'तत्र साधुः' इत्यनेन साध्वर्थे यति प्रत्यये सति साधवो भवन्ति । भवार्थे पुनर्दिगादिपाठेऽपि वंशशब्दस्य वंशशब्दान्तान्न यत्प्रत्ययः, तदन्तविधेः प्रतिषेधात् ।

## दारवशब्दो दुष्प्रयुक्तः ॥ ५३ ॥

दारवं पात्रमिति दारवशब्दो दुष्प्रयुक्तः । 'नित्यं वृद्धशरादिभ्यः' इति मयटा भवितव्यम् । ननु विकारावयवयोरर्थयोर्मयट् विधीयते;

---

'शाश्वते प्रतिषेधः' इति वार्तिककारवचनादत्र अण्प्रत्यये सति शाश्वतमिति शब्दः साधुरित्याक्षेपपूर्वकं समर्थयते— **शाश्वतं ज्योतिरिति** ।

**राजवंश्यादय इति** । वंशशब्दस्य दिगादिषु पाठात् 'दिगादिभ्यो यत्' इति भवार्थे यत्प्रत्ययो विधीयते । स च वंशशब्दान्तान्न प्राप्नोति, 'ग्रहणवता प्रातिपदिकेन--इति तदन्तविधिप्रतिषेधात् । साध्वर्थविवक्षायां तु 'तत्र साधुः' इति यत्प्रत्यये सति राजवंश्यादयः सिद्धा इत्याह— **राजवंश्या इति** ।

**दारवशब्द इति** । दारुणो विकार इत्यस्मिन्नर्थे 'नित्यं वृद्धशरादिभ्यः' इति मयटो विधानात् दारुमयमिति प्रयोक्तव्यम्, न तु दारवमितीत्याह—**दारवं पात्रमिति** । नन्वत्र विकारार्थो न विवक्षितः, किं तु संबन्धसामान्यम् । ततः 'तस्येदम्' इति दारुशब्दादण्प्रत्यये कृते दारवमित्येवं भवतु; को विरोध इति शङ्कते--**नन्विति** । संबन्धसामान्यविवक्षायामप्यण्प्रत्ययो न सिध्यति, 'वृद्धा-

अत्र तु दारुण इदमिति विवक्षायां दारवमिति भविष्यति? नैतदेवम्; 'वृद्धाच्छः' इति च्छविधानात्।

**मुग्धिमादिष्विमनिज्मृग्यः ॥ ५४ ॥**

मुग्धिमा, प्रौढिमा इत्यादिषु इमनिच् मृग्यः अन्वेषणीय इति।

**औपम्यादयश्चातुर्वर्ण्यवत् ॥ ५५ ॥**

औपम्यं सांनिध्यमित्यादयः चातुर्वर्ण्यवत् 'गुणवचन—' इत्यत्र 'चातुर्वर्ण्यादीनामुपसंख्यानम्' इति वार्तिकात् स्वार्थिकष्यञन्ताः।

**ष्यञः षित्करणादीकारो बहुलम् ॥ ५६ ॥**

'गुणवचनब्राह्मणादिभ्यः—' इति यः ष्यञ्, तस्य षित्करणादीकारो भवति बहुलम्। ब्राह्मण्यमित्यादिषु न भवति। सामग्र्यमित्यादिषु विकल्पितः—सामग्र्यं सामग्री, वैदग्ध्यं वैदग्धीति।

---

च्छः' इति च्छप्रत्ययप्रसङ्गादिति परिहरति— **नैतदेवमिति**।

**मुग्धिमादिष्विति**। 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्प्रत्ययो विधीयते। स च मुग्धप्रौढादिशब्देभ्यो न प्राप्नोति, तेषां पृथ्वादिपाठाभावादित्यभिप्रायेण व्याचष्टे— **मुग्धिमा प्रौढिमेति**।

**औपम्यादय इति**। 'चातुर्वर्ण्यादयः स्वार्थे' इति स्वार्थिके ष्यञि चातुर्वर्ण्यमिति यथा सिध्यति, तथा चातुर्वर्ण्यादिपाठादुपमैवौपम्यं संनिधिरेव सांनिध्यमित्यादयः स्वार्थिकष्यञन्ताः साधिता इत्याह— **औपम्यं सांनिध्यमिति**।

**ष्यञ इति**। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् विधीयते। ततश्च ष्यञन्तेभ्यः स्त्रियां 'षिद्गौरादिभ्यश्च' इति यो ङीष्प्रत्ययो विधीयते; स ईकारो बहुलं भवति क्वचिन्न प्रवर्तते, क्वचिद्विकल्पेन प्रवर्तत इत्याह— **ब्राह्मण्यमित्यादिष्विति**।

**धन्वीति व्रीह्यादिपाठात् ॥ ५७ ॥**

व्रीह्यादिषु धन्वन्शब्दस्य पाठाद्धन्वीति इनौ सति सिद्धो भवति ।

**चतुरश्रशोभीति णिनौ ॥ ५८ ॥**

'बभूव तस्याश्चतुरश्रशोभि वपुर्विभक्तं नवयौवनेन' इत्यत्र चतुरश्रशोभीति न युक्तम्; व्रीह्यादिषु शोभाशब्दस्य पाठेऽपि इनिरत्र न सिध्यति 'ग्रहणवता प्रातिपदिकेन' इति तदन्तविधिप्रतिषेधात् । भवतु वा तदन्तविधिः । कर्मधारयान्मत्वर्थीयानुपपत्तिर्लघुत्वात् क्रमस्येति बहुव्रीहिणैव भवितव्यम् । तत्कथं मत्वर्थीयस्याप्राप्तौ चतुरश्रशोभीति प्रयोगः? आह— णिनौ चतुरश्रं शोभत इति ताच्छीलिके णिनावयं प्रयोगः ।

---

**धन्वीति** । धन्वन्शब्दस्य अदन्तत्वाभावात् 'अत इनिठनौ' इतीनिप्रत्ययस्याप्राप्तौ व्रीह्यादेराकृतिगणत्वेनेनिप्रत्यये सति धन्वीति सिध्यतीत्याह— **व्रीह्यादिष्विति** ।

**चतुरश्रशोभीति** । अत्र साधुत्वं समर्थयिष्यमाणः प्रामाणिकप्रयोगं तावत्प्रदर्शयति— **बभूवेति** । अत्र मत्वर्थीयप्रत्ययस्यानुपपत्तिमाह— **अत्र चतुरश्रशोभीति** । चतुरश्रा चासौ शोभा च चतुरश्रशोभा, सा अस्यास्तीति चतुरश्रशोभीति मत्वर्थीयेन न सिध्यति, व्रीह्यादिपाठाभावादिति शङ्कितुरभिप्रायः । अभ्युपगम्यमाने वा व्रीह्यादिपाठे 'ग्रहणवता प्रातिपदिकेन न तदन्तविधिः' इति वार्तिककारवचनाच्छोभाशब्दान्तादिनिप्रत्ययो न प्राप्नोतीत्याह— **व्रीह्यादिष्विति** । यथा कथंचिदभ्युपगमेऽपि वा तदन्तविधेः स दोषस्तदवस्थः, 'न कर्मधारयान्मत्वर्थीयः' इति निषेधादित्याह— **भवत्विति** । कर्मधारयबहुव्रीहिक्रमपरीक्षायां बहुव्रीहिपरिपाटी श्रेयसी, लाघवात् । अतश्चित्रगुशब्दादिवत् बहुव्रीहेर्न मत्वर्थीयस्य प्राप्तिरित्याह— **लघुत्वादिति** । प्रयोगानुपपत्तिप्रतिपादनं निगमयति— **तत् कथमिति** । चतुरश्रं शोभितुं शीलमस्येति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छीलिके णिनिप्रत्यये सति चतुरश्रशोभीति सिध्यतीति सिद्धान्तयति— **चतुरश्रं शोभत इतीति** ।

अथ 'अनुमेयशोभि' इति कथम्? न ह्यत्र पूर्ववद्वृत्तिः शक्या कर्तुमिति; शुभेः साधुकारिण्यावश्यके वा णिनिं कृत्वा तदन्ताच्च भावप्रत्यये पश्चात् बहुव्रीहिः कर्तव्यः— अनुमेयं शोभित्वं यस्येति। भावप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः, यथा—निराकुलं तिष्ठति, सर्धारमुवाचेति।

**कञ्चुकीया इति क्यचि ॥ ५९ ॥**

'जीवन्ति राजमहिषीमनु कञ्चुकीयाः' इति कथम्? मत्वर्थीयस्य च्छप्रत्ययस्याभावात्। अत आह— क्यचि। क्यचि अच्प्रत्यये सति कञ्चुकीया इति भवति; कञ्चुकमात्मन इच्छन्ति कञ्चुकीयाः।

**बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः ॥ ६० ॥**

---

ननु चतुरश्रशोभीत्यत्र समर्थितेऽपि साधुत्वे अनुमेयशोभीति न सिध्यति, उक्तन्यायाप्रवृत्तेरिति शङ्कते--**अथेति**। तदप्रवृत्तिमेव दर्शयति— **न ह्यत्रेति**। चतुरश्रशोभीतिवदनुमेयं शोभितुं शीलमस्येति विग्रहे विवक्षितार्थासिद्धिः, कर्मविवक्षाया असंभवात्। अविवक्षिते कर्मण्युपपदे कृत्प्रत्ययः कर्तुं न शक्यत इति शङ्कार्थः। ताच्छीलिकणिनेरसंभवेऽपि, 'साधुकारिणि च' इति वक्तव्यबलात्, 'आवश्यकाधमर्ण्ययोर्णिनिः' इति सूत्राद्वा साधुकारिण्यावश्यके वार्थे विवक्षिते णिनिः सिध्यति। ततः शोभिनो भाव इति भावार्थे त्वप्रत्यये सति पश्चादनुमेयं शोभित्वं यस्येति बहुव्रीहौ सत्यनन्तरम् 'उक्तार्थानामप्रयोगः' इति त्वत्प्रत्ययस्य निवृत्तौ च सत्याम् अनुमेयशोभीति सिध्यतीति परिहरति-- **शुभेरिति**।

**कञ्चुकीया इति**। कञ्चुका एषां सन्तीति कञ्चुकीया इति न शक्यते वक्तुम्, छप्रत्ययस्य मत्वर्थीयस्याभावात्। कथं कञ्चुकीया इति चोदयति— **जीवन्तीत्यादिना**। कञ्चुकमात्मन इच्छन्तीत्येतस्मिन्नर्थे, 'सुप आत्मनः क्यच्' इति क्यचि कृते 'क्यचि च' इतीकारे च सति ततः पचाद्यचि कृते कञ्चुकीया इति सिध्यतीति परिहरति-- **क्यचि अच्प्रत्यये सतीति**।

**बौद्धप्रतियोग्यपेक्षायामिति**। इदं धनम्, इदं च धनम्, इदमनयोर-

बौद्धस्य प्रतियोगिनोऽपेक्षायामपि आतिशायनिकास्तरबादयो भवन्ति— घनतरं तमः, बहुलतरं प्रेमेति ।

**कौशिलादय इलचि वर्णलोपात् ॥ ६१ ॥**

कौशिलः, वासिल इत्यादयः कथम्? आह— इलचि वर्णलोपात् कौशिकवासिष्ठादिभ्यः शब्देभ्यो नीतावनुकम्पायां वा 'घनिलचौ च' इतीलचि कृते 'ठाजादावूर्ध्वं द्वितीयादचः' इति वर्णलोपात् सिध्यति ।

**मौक्तिकमिति विनयादिपाठात् ॥ ६२ ॥**

मुक्तैव मौक्तिकमिति विनयादिपाठात् द्रष्टव्यम् । 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति नपुंसकत्वम् ।

---

तिशयेन घनमिति विग्रहे शब्दोपात्तप्रतियोग्यपेक्षया अतिशायनार्थे तरबादिविधानादसति शब्दोपात्ते प्रतियोगिनि घनतरं तम इति प्रयोगः कथमिति चिन्तायां बुद्धिसंनिधापितेऽपि प्रतियोगिन्यातिशायनिकाः प्रत्यया भवन्तीति दर्शयति— **बौद्धस्येति** ।

**कौशिलादय इति** । अनुकम्पितः कौशिकः, अनुकम्पितो वासिष्ठ इत्यस्मिन्नर्थे कौशिलो वासिलः इत्यादयः प्रयोगाः कथमिति विचारणायां साधुत्वं समर्थयते— **कौशिलो वासिल इति** । अत्र 'घनिलचौ च' इति सूत्रेण अनुकम्पायां नीतौ वा बह्वचो मनुष्यनाम्नो घनिलचौ प्रत्ययौ विधीयेते । अतः कौशिकवासिष्ठशब्दाभ्यामुक्तलक्षणाभ्यामिलचि कृते 'ठाजादावूर्ध्वं द्वितीयादचः' इत्यजादौ प्रत्यये परतः प्रकृतेर्द्वितीयादचः परस्य शब्दरूपस्य लोपे सति 'यस्येति च' इतीकारलोपे च कौशिलो वासिल इत्यादयः प्रयोगाः सिध्यन्तीति समर्थयते— **कौशिकेति** ।

**मौक्तिकमिति** । विनयादिषु पाठेऽभ्युपगते 'विनयादिभ्यष्ठक्' इति स्वार्थिके ठकि कृते मौक्तिकमिति सिध्यतीत्याह— **मुक्तैव मौक्तिकमिति** । अत्र प्रकृतिलिङ्गस्यातिक्रमणे भाष्यकारवचनं प्रमाणयति— **स्वार्थिका इति** ।

## प्रातिभादयः प्रज्ञादिषु ॥ ६३ ॥

प्रातिभादयः शब्दाः प्रज्ञादिषु द्रष्टव्याः । प्रतिभाविकृतिद्विता-दिभ्यः शब्देभ्यः प्रज्ञादिपाठादणि स्वार्थिके कृते प्रातिभम्, वैकृतम्, द्वैतमित्यादयः प्रयोगाः सिध्यन्तीति ।

## न सरजसमित्यनव्ययीभावे ॥ ६४ ॥

'मधु सरजसं मध्येपद्मं पिबन्ति शिलीमुखाः' इत्यादिषु सरजस-मिति न युक्तः प्रयोगोऽनव्ययीभावे, अव्ययीभाव एव सरजसशब्दस्ये-ष्टत्वात् ।

## न धृतधनुषीत्यसंज्ञायाम् ॥ ६५ ॥

'धृतधनुषि शौर्यशालिनि' इत्यत्र धृतधनुषीति असंज्ञायां न युक्तः प्रयोगः, 'धनुषश्च' इत्यनङ्विधानात् । संज्ञायां ह्यनङ् विकल्पितः 'वा संज्ञायाम्' इति ।

## दुर्गन्धिपद इद्दुर्लभः ॥ ६६ ॥

---

**प्रातिभादय इति** । 'प्रज्ञादिभ्यश्च' इति स्वार्थिकोऽण् विधीयते । प्रति-भादीनामप्यत्र पाठाभ्युपगमेन स्वार्थिकेऽणप्रत्यये कृते प्रातिभं वैकृतं द्वैतं चारि-त्रमित्यादयः सिध्यन्तीति व्याचष्टे— **प्रातिभादयः शब्दा इति** ।

**न सरजसमिति** । बहुव्रीहिप्रयोगो न साधुरिति दर्शयितुमाह— **मधु रजसमित्यादिना** । अनव्ययीभावे प्रयोगो न युक्तः । रजसा सह वर्तत इति सरजसमिति बहुव्रीहिसमासो न सिध्यति । तस्मिन् हि सति सरजस्कमिति स्यात् । अव्ययीभावे तु सिध्यति । 'अव्ययं विभक्ति—' इत्यादिना साकल्यार्थे अव्ययीभावे कृते अचतुरादिसूत्रेणाकारान्तत्वनिपातनात् सरजसमिति भवति । तथा चाह वृत्तिकारः 'तत एकोऽव्ययीभावः साकल्ये । सरजसमभ्यवहरतीति । बहुव्रीहौ न भवति । रजसा सह वर्तते इति सरजस्कं पङ्कजमिति' इति ।

**न धृतधनुषीति** । निगदव्याख्यानमेतत् ।

**दुर्गन्धिपद इति** । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इति उदादिभ्यश्च-

'दुर्गन्धिः कायः' इत्यादिषु दुर्गन्धिपदे इत् समासान्तो दुर्लभः, उत्पूत्यादिषु दुःशब्दस्यापाठात् ।

## सुदत्यादयः प्रतिविधेयाः ॥ ६७ ॥

सा दक्षरोषात्सुदती ससर्ज' इति, 'शिखरदति पतति रशना' इत्यादिषु सुदत्यादयः शब्दाः प्रतिविधेयाः, दत्रादेशलक्षणाभावात् । तत्र प्रतिविधानम्— अग्रान्तादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् सुदत्यादिषु दत्रादेश इत्येके । अन्ये तु वर्णयन्ति—सुदत्यादयः स्त्र्यभिधायिनो योगरूढशब्दाः; तेषु 'स्त्रियां संज्ञायाम्' इति दत्रादेशो विकल्पेन सिद्ध एवेति ।

## क्षतदृढोरस इति न कप्तदन्तविधिप्रतिषेधात् ॥ ६८ ॥

'प्लवंगनखकोटिभिः क्षतदृढोरसो राक्षसाः' इत्यत्र दृढोरःशब्दात्, 'उरःप्रभृतिभ्यः कप्' इति कप् न कृतः, 'ग्रहणवता प्रातिपदिकेन'

---

तुभ्यः परस्य गन्धशब्दस्य समासान्तविधानात् उदादिषु दुरो ग्रहणाभावात् दुर्गन्धिरिति प्रयोगो न साधुरिति दर्शयति— **दुर्गन्धिः काय इति ।**

**सुदत्यादय इति ।** वयस्यविवक्षिते दत्रादेशप्राप्तेरभावेऽपि शिष्टप्रयुक्तत्वात् सुदत्यादयः, प्रतिविधेयाः समाधेयाः । अत्र केचित्— अग्रान्तादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् अहिदन्नित्यादिष्विव दत्रादेशे कृते 'उगितश्च' इति ङीपि सति सुदत्यादयः सिध्यन्तीति प्रतिविदधते । अपरे तु— स्त्रीमात्राभिधायिनो योगरूढाः सुदत्यादय इति, 'स्त्रियां संज्ञायाम्' इति दत्रादेशे सिध्यन्तीति वदन्तीत्यभिप्रायेण व्याचष्टे— **सा दक्षरोषादित्यादिना ।**

क्षतदृढोरस इत्यस्य साधुत्वं समर्थयितुं प्रथमं तावत् प्रामाणिकप्रयोगं प्रदर्शयति—**प्लवंगेति ।** ननु बहुव्रीहौ समासे उरःप्रभृतिभ्यो नित्यं कब्विधानात् क्षतदृढोरस्क इति कपा भवितव्यमिति प्राप्ते, कबभावे कारणं कथयितुमाह— **उरःप्रभृतिभ्य इति ।** 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेष्यते' इति वच-

इति तदन्तविधेः प्रतिषेधात् । समासवाक्यं त्वेवं कर्तव्यम्— क्षतं दृढोरो येषामिति ।

**अवैहीति वृद्धिरवद्या ॥ ६९ ॥**

अवैहीत्यत्र वृद्धिरवद्या ; गुण एव युक्त इति ।

**अपाङ्गनेत्रेति लुगलभ्यः ॥ ७० ॥**

अपाङ्गे नेत्रं यस्याः सेयमपाङ्गनेत्रेत्यत्र लुक् अलभ्यः, 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सप्तम्या अलुग्विधानात् ।

**नेष्टाः श्लिष्टप्रियादयः पुंवद्भावप्रतिषेधात् ॥ ७१ ॥**

---

नादुरःशब्दान्तात् कप्प्रत्ययो न भवति । तथा च विग्रहवाक्यमेवं कर्तव्यम्–दृढं च तदुरश्च दृढोरः, क्षतं दृढोरो येषामिति ; अतः क्षतदृढोरस इति सिध्यतीत्यर्थः ।

अवैहीति । अवैहीत्यत्र इणो लोण्मध्यमपुरुषे, 'सेर्ह्यपिच्च' इति ह्यादेशे सति ङिद्वद्भावात् गुणाभावे, इहीति रूपम् । ततश्चावशब्दस्य प्राक्प्रयोगे 'आद्गुणः' इति गुणे सति, अवेहीति भवति । 'एत्येधत्यूठ्सु' इत्यत्र, एतेरेचि इत्यनुवर्तनात् वृद्धिर्न भवति । नन्ववाङोरुभयोरुपसर्गयोः प्राक्प्रयोगे वृद्धिः सिध्यतीति न चोदनीयम्, 'ओमाङोश्च' इति पररूपप्रसङ्गात् । तस्मादवैहीत्यत्र वृद्धिरसाधीयसीत्यर्थः ।

अपाङ्गनेत्रेति । नेत्रशब्देन समुदायवाचिना तदेकदेशः कनीनिका लक्ष्यते । ततश्चापाङ्गे नेत्रं कनीनिका यस्याः सा अपाङ्गेनेत्रेति प्रयोक्तव्यम ; न त्वपाङ्गनेत्रेति, 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति नित्यं सप्तम्या अलुग्विधानादित्यभिप्रायवानाह— अपाङ्गे नेत्रमिति ।

नेष्टा इति । श्लिष्टा प्रिया येन, विश्लिष्टा कान्ता यस्मात् स विश्लिष्टप्रियः, विश्लिष्टकान्त इत्यादयः प्रयोगा इष्टा न भवन्ति, 'स्त्रियाः पुंवत्' इत्यादि-

श्लिष्टप्रियः, विश्लिष्टकान्त इत्यादयो नेष्टाः, 'स्त्रियाः पुंवत्—' इति पुंवद्भावस्य प्रियादिषु निषेधात् ।

**दृढभक्तिरिति सर्वत्र ॥ ७२ ॥**

'दृढभक्तिरसौ ज्येष्ठे' अत्र पूर्वपदस्य अस्त्रियां विवक्षितत्वात् ।

**जम्बुलतादयो ह्रस्वविधेः ॥ ७३ ॥**

जम्बुलतादयः प्रयोगाः कथम्? आह— ह्रस्वविधेः । 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वविधानात् ।

**तिलकादयोऽजिरादिषु ॥ ७४ ॥**

---

सूत्रे प्रियादिषु पुंवद्भावप्रतिषेधादिति दर्शयति--**श्लिष्टप्रिय इत्यादिना** ।

**दृढभक्तिरिति** । अत्र भक्तिशब्दस्य प्रियादिपाठात् पूर्वपदस्य पुंवद्भावो दुर्घट इति प्राप्ते पूर्वपदस्य दृढशब्दस्य विग्रहवाक्ये स्त्रीत्वस्याविवक्षितत्वात् दृढभक्तिरिति सिध्यतीत्याह— **अत्रेति** । तथाचाह वृत्तिकारः, 'दृढभक्तिरित्येवमादिषु पूर्वपदस्य स्त्रीत्वस्याविवक्षितत्वात् सिद्धमिति समाधेयम्' इति । गणव्याख्यानकारोऽपि 'दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिः' इति । न्यासकारोऽपि, 'अदार्ढ्यनिवृत्तिपरे दृढशब्दे लिङ्गविशेषस्यानुपकारकत्वात्स्त्रीत्वमविवक्षितमेव । तस्मादस्त्रीलिङ्गस्यैव दृढशब्दस्यायं प्रयोग इत्यभिप्रायः' इति । भोजराजस्त्वन्यथा समाधत्ते भक्तौ च कर्मसाधनायामित्यत्र सूत्रे— 'कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिषु पाठात् भवानीभक्तिरित्यादौ पुंवद्भावप्रतिषेधः । दृढभक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावे सिद्धे स्त्रीपूर्वपदत्वमेव' इति ।

**जम्बुलतादय इति** । 'इको ह्रस्वोऽङ्यो गालवस्य' इति ङ्यन्तव्यतिरिक्तस्येगन्तस्योत्तरपदे परतो विकल्पेन ह्रस्वविधानाज्जम्बुलतादयः सिद्धा इत्याह— **जम्बुलतादय इति** ।

**तिलकादय इति** । 'मतौ बह्वचोऽनजिरादीनाम्' इति मतुप्प्रत्यये परतोऽजिरादिवर्जितस्य बह्वचो दीर्घविधानात्तिलकादीनामजिरादिपाठाभ्युपगमेन

तिलकादयः शब्दा अजिरादिषु द्रष्टव्याः अन्यथा तिलकवती कनकवतीत्यादिषु मतुपि 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घत्वं स्यात्। अन्ये तु वर्णयन्ति— 'नद्यां मतुप्' इति यो मतुप् तत्रायं विधिः; तेषां मतं न, अमरावतीत्यादीनामसिद्धेः।

**निशम्यनिशमय्यशब्दौ प्रकृतिभेदात् ॥ ७५ ॥**

निशम्य निशमय्येत्येतौ शब्दौ श्रुत्वेत्येतस्मिन्नर्थे। शमेः ल्यपि 'ल्यपि लघुपूर्वात्' इत्ययादेशे सति निशमय्येति भवितव्यम्; न निशम्येति। आह—प्रकृतिभेदात्। शमेर्दैवादिकस्य निशम्येति रूपम्। 'शमो दर्शने' इति चुरादौ णिचि मित्संज्ञकस्य निशमय्येति रूपम्।

**संयम्यनियम्यशब्दावणिजन्तत्वात् ॥ ७६ ॥**

कथं संयम्यनियम्यशब्दौ? ल्यपि 'ल्यपि लघुपूर्वात्' इति णेरया-

दीर्घनिषेधात्तिलकवतीत्यादयः सिध्यन्तीत्याह— **तिलकादयः शब्दा इति**। अजिरादिषु पाठानभ्युपगमे प्रयोगविरोधं प्रदर्शयति— **अन्यथेति**। परे तु प्रकारान्तरेण प्रयोगं प्रतिष्ठापयन्ति। तेषां मतं दूषयितुमनुभाषते— **अन्ये त्विति**। यत्र 'नद्यां मतुप्' इति नदीविषये मतुप्प्रत्ययो विधीयते तत्रायं दीर्घविधिः। तिलकादिषु 'तदस्यास्त्यस्मिन्' इति मतुब्विधानात्तिलकवतीत्यादिषु दीर्घाभाव इति वदन्ति। तदेतद्दूषयति— **तेषां मतमिति**।

**निशम्येति**। दिवादिपाठादण्यन्तशमिरेका प्रकृतिः। चुरादिषु पाठात् 'शमो दर्शने' इति श्रवणार्थे मित्संज्ञको णिजन्तः शमिरपरा प्रकृतिः। अतः प्रकृतिभेदाद्रूपद्वयसिद्धिरित्याह— **निशम्येत्यादि**।

**संयम्येति**। प्रयोजकव्यापारप्रतीतेरत्र णिचा भवितव्यम्। तस्मिंस्तु सति 'ल्यपि लघुपूर्वात्' इति णेरयादेशे संयमय्य नियमय्य इति प्रयोक्तव्यम् कथं संयम्यनियम्यशब्दाविति अनुयोक्तुरभिप्रायः। शङ्कामिमां शकलयितुं हेतु-

देशेन भवितव्यम् । आह— अणिजन्तत्वात् । धातोर्णिच् तु न, गतार्थत्वात्; यथा— वाचं नियच्छति इति । णिजर्थानवगतौ णिच् प्रयुज्यते एव; यथा— संयमयितुमारब्ध इति ।

## प्रपीयेति पीङः ॥ ७७ ॥

प्रपीयेत्ययं शब्दः 'पीङ् पाने' इत्येतस्य । पिबतेर्हि 'न ल्यपि' इतीत्वप्रतिषेधात् प्रपायेति भवति ।

## दूरयतीति बहुलग्रहणात् ॥ ७८ ॥

'दूरयत्यवनते विवस्वति' इत्यत्र दूरयतीति कथम्? 'णाविष्ठवद्भावे 'स्थूलदूर—' इत्यादिना गुणलोपयोः कृतयोर्दवयतीति भवितव्यम् । आह—बहुलग्रहणात् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यत्र बहुलग्रहणात् स्थूलदूरादिसूत्रेण यद्विहितं तन्न भविष्यतीति ।

## गच्छतीप्रभृतिष्वनिषेध्यो नुम् ॥ ७९ ॥

---

माह— **अणिजन्तत्वादिति** । णिजभावाण्णेरयादेशो न प्रसज्ज्यत इत्यर्थः । ननु प्रयोजकव्यापारप्रतीतौ णिच्प्रत्ययः किं न स्यादित्यत आह— **णिच् तु नेति** । गतार्थत्वात् प्रयोजकव्यापारशून्यस्य सकर्मकस्य प्रकृत्यर्थस्य धातुनैवाभिहितत्वादित्यर्थः । तत्र दृष्टान्तमाह— **यथा वाचमिति** । यत्र णिजर्थः स्वभावतो नावगम्यते तत्र णिच् प्रयुज्यत एवेति दर्शयति— **णिजर्थानवगताविति** ।

**प्रपीयेति** । पीङ् पाने' इति धातोर्ल्यबन्तमिदम्, न तु पिबतेः । तस्य 'न ल्यपि' इतीत्वप्रतिषेधादित्याह— **पिबतेरिति**

दूरयतीति प्रयोगस्य साधुत्वं समर्थयितुं शङ्कामिमामङ्कुरयति— **दूरयतीति** । शेषं सुगमम् ।

**गच्छतीप्रभृतिष्विति** । 'शप्श्यनोर्नित्यम्' इति नित्यं नुमागमस्य विधानात् गच्छतीत्यादयो न साधव इत्यर्थः ।

'हरति हि वनराजिर्गच्छती श्यामभावम्' इत्यादिषु गच्छती-प्रभृतिषु शब्देषु 'शप्श्यनोर्नित्यम्' इति नुम् अनिषेध्यो निषेद्धुमशक्यः ।

## मित्रेण गोप्त्रेति पुंवद्भावात् ॥ ८० ॥

मित्रेण गोप्त्रेति कथम्? गोप्तृणा इति भवितव्यम्, 'इकोऽचि विभक्तौ' इति नुम्विधानात् । आह—पुंवद्भावात् । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावेन गोप्त्रेति भवति ।

## वेत्स्यसीति पदभङ्गात् ॥ ८१ ॥

'पतितं वेत्स्यसि क्षितौ' इत्यत्र वेत्स्यसीति न सिध्यति, इट्प्रसङ्गात् । आह—पदभङ्गात् । वेत्स्यसीति पदं भज्यते—वेत्सि, असि । असीत्ययं निपातस्त्वमित्यस्मिन्नर्थे । क्वचिद्वाक्यालंकारे प्रयुज्यते । यथा—'पार्थिवस्त्वमसि सत्यमभ्यधाः' इति ।

## कामयानशब्दः सिद्धोऽनादिश्चेत् ॥ ८२ ॥

कामयानशब्दः सिद्धः 'आगमानुशासनमनित्यम्' इति मुक्यकृते; यद्यनादिः स्यात् ।

## सौहृददौर्हृदशब्दावणि हृद्भावात् ॥ ८३ ॥

---

**मित्रेण गोप्त्रेति** । स्पष्टमवशिष्टम् ।

**वेत्स्यसीति** । विदेर्ज्ञानार्थस्यानुदात्तोपदेशत्वाभावादिडागमेन भवितव्यम् । तथा च वेत्स्यसीति न सिध्यतीति चिन्तायां पदं विभज्य प्रयोगसाधुत्वं समर्थ्यते—पतितमित्यादिना ।

**कामयान इति** । 'आगमानुशासनमनित्यम्' इति वचनात् 'आने मुक्' इत्यकृते मुगागमे कामयान इति । स च प्रामाणिकैः प्रयुक्तश्चेत् साधुरित्यभिप्रायः ।

**सौहृददौर्हृदशब्दाविति** । शोभनं हृदयं यस्य, दुष्टं हृदयं यस्येति विग्र-

सुहृदयदुर्हृदयशब्दाभ्यां युवादिपाठादणि कृते हृदयस्य हृद्भावे आदिवृद्धौ सौहृददौर्हृदशब्दौ भवतः। सुहृद्दुर्हृच्छब्दाभ्यां युवादिपाठादेवाणि कृते 'हृद्भगसिन्ध्वन्ते—' इति हृदन्तस्य तद्धितेऽणि सत्युभयपदवृद्धौ सत्यां सौहार्दं दौर्हार्दमिति भवति।

## विरम इति निपातनात् ॥ ८४ ॥

रमेरनुदात्तोपदेशत्वात् 'नोदात्तोपदेशस्य—' इत्यादिना वृद्धिप्रतिषेधस्याभावात् कथं विरम इति? आह—निपातनात् 'यम उपरमे' इत्यत्र उपरमे इति। एतत्तु उपलक्षणम्, अतन्त्रं च उपोपसर्ग इति।

## उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया ॥ ८५ ॥

हृसिद्धाभ्यां सुहृदयदुर्हृदयशब्दाभ्यां भावार्थे 'हायनान्तयुवादिभ्योऽण्' इत्यणि कृते सति 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ च सत्यां सौहृददौर्हृदशब्दौ सिद्धौ। अत्र हृच्छब्दस्य लाक्षणिकत्वात् 'हृद्भगसिन्ध्वन्ते—' इत्यत्र प्रतिपदोक्तस्य ग्रहणादुभयपदवृद्ध्यभावः। शोभनं हृद् यस्य, दुष्टं हृद् यस्येति विग्रहे, सिद्धाभ्यां सुहृद्दुर्हृच्छब्दाभ्यां युवादिपाठादणि कृते 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धौ सौहार्दं दौर्हार्दमिति च सिद्धमिति व्याचष्टे—**सुहृदय इत्यादिना**।

**विरम इति**। विरमेर्मान्तत्वेऽपि अनुदात्तोपदेशत्वात्, 'नोदात्तोपदेशस्य—' इत्यादिना वृद्धिप्रतिषेधाभावात् वृद्धौ सत्यां विराम इति युक्तं प्रयोक्तुम्, कथं विरम इति प्राप्ते, 'यम उपरमे' इत्यत्र निपातनात् सिध्यतीति दर्शयति— **रमेरिति**। उपरम इति निपातेन [illegible] इत्यस्य किमायातमिति तत्राह— **एतत्त्विति**। एतत्तु निपातनं सोपसर्गस्य रमेरुपलक्षणमित्यवगन्तव्यम्।

**उपर्यादिष्विति**। 'उपर्यध्यधसः सामीप्ये' इत्युपर्यादीनां सामीप्यार्थे द्विर्वचनविधानात् द्विरुक्तैस्तैर्योगे सति द्वितीयाविभक्तिर्भवति। वीप्सायां तु

उपर्यादिषु शब्देषु सामीप्ये द्विरुक्तेषु 'उपर्यध्यधसः सामीप्ये' इत्यनेन 'उपर्यादिषु त्रिषु द्वितीयाम्रेडितान्तेषु' इति द्वितीया। वीप्सायां तु द्विरुक्तेषु षष्ठ्येव भवति— 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः।'

## मन्दं मन्दमित्यप्रकारार्थत्वे ॥ ८६ ॥

'मन्दं मन्दं नुदति पवनः' इत्यत्र मन्दं मन्दमिति अप्रकारार्थत्वे भवति। प्रकारार्थत्वे तु 'प्रकारे गुणवचनस्य' इति द्विर्वचने कृते कर्मधारयवद्भावे च मन्दमन्दामिति प्रयोगः। मन्दं मन्दमित्यत्र तु 'नित्यवीप्सयोः' इति द्विर्वचनम्। अनेकभावात्मकस्य नुदेर्यदा सर्वे भावा मन्दत्वेन व्याप्तुमिष्टा भवन्ति तदा वीप्सेति।

## न निद्राद्रुगिति भष्भावप्राप्तेः ॥ ८७ ॥

'निद्राद्रुक्काद्रवेयच्छविरुपरिलसद्धर्घरो वारिवाहः' इत्यत्र निद्राद्रुगिति न युक्तः, 'एकाचो बशो भष्—' इति भष्भावप्राप्तेः। अनुप्रासप्रियैस्त्वपभ्रंशः कृतः।

## निष्पन्द इति षत्वं चिन्त्यम् ॥ ८८ ॥

---

षष्ठीविभक्तिर्भवतीति व्यवस्थामाह— उपर्यादिष्विति। क्रियागुणाभ्यां युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा।

मन्दं मन्दमिति। वीप्साप्रकारार्थयोः प्रयोगद्वयव्यवस्थां प्रतिपादयितुमाह— मन्दं मन्दं नुदतीति। कर्मधारयवद्भावे चेति। 'कर्मधारयवदुत्तरेषु' इत्यनेन कर्मधारयवद्भावे सुलोपादिर्भवति। अनेकभावविषया व्याप्तुमिच्छा येति वीप्सा; तां दर्शयति— अनेकभावेति।

न निद्रेति। निद्रध्रुगिति वक्तव्ये निद्राद्रुगित्यपभ्रंश इत्याह— निद्राद्रुक्काद्रवेय इति।

निष्पन्द इति। अत्र षत्वप्राप्तावनुशासनादर्शनात् सुषामादिष्वपि पाठा-

न ह्यत्र षत्वलक्षणमस्ति। सुषामादिपाठोऽप्यस्य न निश्चितः ।

**नाङ्गुलिसङ्ग इति मूर्धन्यविधेः ॥ ८९ ॥**

'म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रजः' इत्यत्राङ्गुलिसङ्ग इति न युक्तः 'समासेऽङ्गुलेः सङ्गः' इति मूर्धन्यविधानात् ।

**तेनावन्तिसेनादयः प्रत्युक्ताः ॥ ९० ॥**

तेन अङ्गुलिसङ्ग इत्यनेन अवन्तिसेनः, इन्दुसेन एवमादयः शब्दाः प्रत्युक्ताः प्रत्याख्याताः, 'सुषामादिषु च' 'एति संज्ञायामगात्' इति मूर्धन्यविधानात् ।

**नेन्द्रवाहने णत्वमाहितत्वस्याविवक्षितत्वात् ॥ ९१ ॥**

'कुथेन नागेन्द्रमिवेन्द्रवाहनम्' इत्यत्रेन्द्रवाहनशब्दे 'वाहनमाहितात्' इति णत्वं न भवति, आहितत्वस्य अविवक्षितत्वात् । स्वस्वामि-

---

निश्चयाच्च षत्वं चिन्त्यं निश्चेतुमशक्यमित्याह— न हीति ।

नाङ्गुलिसङ्ग इति । स्पष्टोऽर्थः ।

तेनेति । 'सुषामादिषु च' इति सूत्रे, 'एति संज्ञायामगात्' इति गणसूत्रबलात् एकारपरस्थागकारात् परस्य संज्ञायां विषये मूर्धन्यादेशविधानादवन्तिसेनादयः प्रत्याख्याता इत्याह— तेनाङ्गुलिसङ्ग इत्यनेनेति ।

नेन्द्रवाहने णत्वमिति । 'चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम्' इत्यादिप्रयोगो दृश्यते । अत्र 'वाहनमाहितात्' इति सूत्रे आहितवाचि यत् पूर्वपदं तस्मान्निमित्तादुत्तरस्य वाहननकारस्य णकारादेशो विधीयते । वाहने यदारोपितं तदाहितमित्युच्यते । तस्मादिक्षुवाहणमितिवदिन्द्रवाहणमिति प्रयोक्तव्यम्, न पुनरिन्द्रवाहनमिति प्राप्ते तन्निषेद्धुमाह—इन्द्रवाहन-

भावमात्रं ह्यत्र विवक्षितम्; तेन सिद्धमिन्द्रवाहनमिति ।

सदसन्तो मया शब्दा विविच्यैवं निदर्शिताः ।
अनयैव दिशा कार्यं शेषाणामप्यवेक्षणम् ॥

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे
द्वितीयोऽध्यायः ॥

समाप्तं चेदं प्रायोगिकं पञ्चममधिकरणम् ॥

---

शब्द इति । अयमर्थः—पूर्वपदार्थस्येक्षुशरादेरिव नेन्द्रस्याहितत्वं विवक्ष्यते, किं तु इन्द्रस्वामिकं वाहनमिन्द्रवाहनमिति स्वस्वामिसंबन्धो विवक्ष्यते । ततश्च दाक्षिवाहनमितिवदिन्द्रवाहनमिति सिद्धमिति ।

सदसन्त इति । एवम् उक्तप्रकारेण । साधवश्चासाधवश्च शब्दा विविच्य पृथक्कृत्य निदर्शिता उदाहृताः । अनयैव दिशा अस्मदुक्तेनैव सदसद्विवेकमार्गेण । शेषाणामनुक्तानां सतामसतां च शब्दानाम् । अवेक्षणं पर्यालोचनं कार्यं कर्तव्यमिति भद्रम् ॥

इत्थं समिद्धगुणसंपदि वामनस्य
प्रस्थानमीमनि चिरादलसोज्झितायाम् ।
व्याख्यानपद्धतिरियं व्यवहारहेतो-
र्निष्कण्टका निपुणमारचिता कवीनाम् ॥

न्यायोक्तिवीचिनिचयेन कुतर्कजाल-
कूलंकषेण गहने गुणरत्नगर्भे ।
सारस्वतामृतसरस्वति नावमेना-
मालम्ब्य रन्तुमनसो विचरन्तु धीराः ॥

पदे केचिद्वाक्ये कतिचन परे मान इतरे
कवित्वेऽलंकारे कतिचन परे नाट्यनिगमे ।
भजन्ति प्रागल्भ्यं न खलु वयमेतेषु गणिता
बहूकुर्वन्त्येते बुधसदसि नः किं तु सुधियः ॥

शब्दार्थौ चरणौ प्रतीकविसरो वाक्यानि गुम्भो लस-
न्मूर्तिर्वस्तु शिरः परिष्कृतिरलंकारोऽसवो रीतयः।
यस्याः स्वीयगुणा गुणाः सुरुचिराः शृङ्गारचेष्टादयो
रम्याष्टादश वर्णनाः कृतिवधूः सेयं जगन्मोहिनी॥

इति कृतरचनायामिन्दुवंशोद्वहेन
त्रिपुरहरधरित्रीमण्डलाखण्डलेन।
ललितवचसि काव्यालंक्रियाकामधेना-
वधिकरणमयासीत्पञ्चमं पूर्तिमेतत्॥

इति श्रीगोपेन्द्रतिप्पभूपालविरचितायां वामनालंकारसूत्रवृत्ति-
व्याख्यायां काव्यालंकारकामधेनौ प्रायोगिकं नाम
पञ्चममधिकरणम्॥

इति काव्यालंकारसूत्रवृत्तिः कामधेनुसहिता संपूर्णा॥





श्रीः ॥

# ॥ सूत्रानुक्रमाणका ॥


| | | पृष्ठम् | | | पृष्ठम् |
|---|---|---|---|---|---|
| **अ** | | | अर्थवैमल्य | ... | ८७ |
| अग्राम्यत्वमुदारता | ... | ९३ | अर्थव्यक्तिहेतुत्व | ... | ८० |
| अजरठत्व सौकु | ... | ८० | अर्थस्य प्रौढि | ... | ८४ |
| अतद्रूपस्यान्यथा | ... | १३२ | अर्थौ द्विविधौ | ... | ९० |
| अतिप्रयुक्त | ... | १५३ | अलंकारस्याल | . | १४६ |
| अनाविद्धललित | ... | ३५ | अवतरापचाय | | १७२ |
| अनुक्तौ समासोक्तिः | ... | १२६ | अवर्ज्यो बहु | | १६४ |
| अनुचरीति | ... | १६९ | अविधौ गुरोः | | १७२ |
| अनुपपत्तिरसंभवः | ... | १२३ | अवैषम्य समता | .. | ८८ |
| अनुल्बणो | ... | १०९ | अवेहीति वृद्धिर | .. | १८४ |
| अनैकान्त्याच्च | ... | ७७ | असम्यार्थान्तर | . | ४७ |
| अन्त्याभ्या वाक्य | ... | ५१ | असादृश्यहता | ... | १२२ |
| अन्यनेयगूढा | . | ४३ | अहेतौ हन्तेर्णिच् | ... | १६८ |
| अपाङ्गनेत्रेति | . | १८४ | **आ** | | |
| अपारुष्य सौकु | .. | ९३ | आमूललोलादिषु | ... | १६३ |
| अप्रतीतगुण | ... | १२१ | आरोहावरोहक्रमः | ... | ७६ |
| अप्रसिद्धार्थप्रयु | ... | ४६ | आरोहावरोहनिमित्त | ... | ७९ |
| अप्रसिद्धासभ्य | .. | ४८ | आसेत्य[illegible] | | १६८ |
| अभिधानकोशात् | ... | २७ | आ[illegible]हेति भूते | .. | १७३ |
| अरोचकिनः सतृणा | ... | १३ | **इ** | | |
| अर्थतस्तदवगमः | ... | ३९ | इतिवृत्तकुटिलत्व | ... | ३० |
| अर्थदृष्टिः समाधिः | ... | ८९ | इष्टः पुनपुंसकयोः | ... | १२० |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| **उ** | | **औ** | |
| उक्तसिद्धयै .. | १३९ | औज्ज्वल्य कान्तिः ... | ८१ |
| उक्तार्थपदमेका .. | ५९ | औपम्यादयश्चा .. | १७८ |
| उक्तिवैचित्र्य .. | ९२ | **क** | |
| उत्प्रेक्षाहेतुरुत्प्रे . | १४७ | कञ्चुकीया इति . | १८० |
| उपमाजन्य रूपक ... | १४६ | करिकलभशब्दे ... | ६२ |
| उपमानाक्षेपश्चा . | १४३ | कर्णावतंसश्रवण ... | ६० |
| उपमानाधिक्यात् .. | १२२ | कलाचतुर्वर्ग ... | ६५ |
| उपमानेनोपमेयस्य .. | १११ | कलाशास्त्रेभ्यः ... | २९ |
| उपमानेनोपमेयस्य .. | १२८ | कल्पितार्थ नेयार्थम् ... | ४५ |
| उपमानोपमेययोर्लिङ्ग ... | ११९ | कवित्वबीज ... | ३२ |
| उपमानोपमेयवाक्येष्वे ... | १३७ | कामयानशब्दः ... | १८८ |
| उपमानोपमेयसशयः ... | १३४ | कामशास्त्रतः ... | ३० |
| उपमेयस्य गुणाति .. | १४० | कार्तिकीय इति ... | १७६ |
| उपमेयस्योक्तौ ... | १२६ | काव्य गद्य पद्य च ... | ३४ |
| उपमेयोपमानाना ... | १३७ | काव्य ग्राह्यमल ... | ८ |
| उपर्यादिषु सामीप्ये . | १८९ | काव्य सद्दृष्टादृष्टा ... | १० |
| **ऊ** | | काव्यबन्धोद्यमो ... | ३१ |
| ऊकारान्तादप्यूङ् ... | १७६ | काव्यशोभायाः ... | ६९ |
| **ए** | | काव्योपदेशगुरु ... | ३१ |
| एकगुणहानि ... | १४१ | किंचिदुक्तावप्रस्तुत .. | १२७ |
| एकस्योपमेय वा ... | १३५ | केसरालमित्यल ... | १६९ |
| **ओ** | | कौशिलादय इलचि .. | १८१ |
| ओजःकान्तिमती .. | १९ | क्रमविधानार्थ वा ... | ७९ |
| ओजःप्रसादयो ... | ७८ | क्रमसिद्धिस्तयोः ... | ३६ |
| ओजःप्रसादश्लेष .... | ७१ | क्रमहीनार्थम ... | ६३ |

| | पृष्ठम् |
|---|---|
| क्रमेणोपमेयोपमा ... | १३६ |
| क्रिययैव स्वतदर्था ... | १३८ |
| क्रियाप्रतिषेधे ... | १३५ |
| **क्ष** | |
| क्षतद्दवोरस इति ... | १८३ |
| क्षीयत इति ... | १५८ |
| **ख** | |
| खिद्यत इति च ... | १५८ |
| **ग** | |
| गच्छतीप्रभृतिष्व ... | १८७ |
| गद्य वृत्तगन्धि ... | ३४ |
| गाढबन्धत्वमोजः .. | ७३ |
| गुणः सम्प्लवात् ... | ७३ |
| गुणद्योतकोप ... | ११४ |
| गुणबाहुल्यतश्च ... | ११२ |
| गुणविपर्यया ... | ३९ |
| गुणविस्तरादय ... | १७१ |
| **घ** | |
| घटना श्लेषः .... | ८७ |
| **च** | |
| चतुरश्रशोभीति ... | १७९ |
| चित्तैकाग्र्यमव .... | ३२ |
| **छ** | |
| छन्दोविचितेर्वृत्त .. | २९ |
| **ज** | |
| जम्बलतादयो .. | १८५ |

| | पृष्ठम् |
|---|---|
| जातिप्रमाण ... | ११६ |
| **त** | |
| त एवार्थगुणाः ... | ८४ |
| तच्च नातत्त्वशीलस्य .. | २३ |
| ततोऽन्यभेद ... | ३८ |
| तत्त्रैविध्य व्रीडा ... | ६९ |
| तत्त्रैविध्यमादि ... | १३८ |
| तत्र काव्यपरिचयो ... | ३१ |
| तदतिशयहेतव .. | ७० |
| तदनिबद्ध निब .. | ३६ |
| तदारोहणार्थ ... | २२ |
| तदिद प्रयुक्तेषु .... | ६२ |
| तदुपारोहादर्थ ... | २४ |
| तद्देशकालाभ्याम् ... | ३३ |
| तद्वैविध्यं ... | ११३ |
| तद्धातुनामभाग ... | ५४ |
| तद्धि चित्र चित्र .. | ३७ |
| तद्भेदावुप ... | १४६ |
| तस्यामर्थगुण ... | २३ |
| तासा पूर्वा ग्राह्या ... | २२ |
| तिरस्कृत इति ... | १६० |
| तिलकादयः [illegible] ... | १८५ |
| तेन वचनभेदो ... | १२१ |
| तेन विपर्ययो ... | १५१ |
| तेनाधिकत्व ... | ११८ |
| तेनानन्तिसेनादयः ... | १९१ |

| | | पृष्ठम् |
|---|---|---|
| तेमेशब्दौ | ... | १६० |
| तैर्महीध्रादयो | ... | १७१ |
| त्रिवलीशब्दः | ... | १६२ |
| दण्डनीतेर्नया | ... | ३० |
| **द** | | |
| दाग्वशब्दो | ... | १७७ |
| दीप्तरसत्व कान्तिः | ... | ९५ |
| दुर्गन्धिपद | ... | १८२ |
| दुष्ट पदमसाधु | ... | ४० |
| दूरयतीति बहुल | .... | १८७ |
| दृढभक्तिरिति | ... | १८५ |
| देशकालस्वभाव | .... | ६४ |
| **ध** | | |
| धनुर्ज्याध्वनौ | ... | ५९ |
| धन्वीति व्रीह्यादि | ... | १७९ |
| धर्मयोरेक | ... | ११७ |
| **न** | | |
| न कतकं पङ्कप्र | ... | १५ |
| न कर्मधारयो | ... | १५१ |
| न कृमिकीटा | .... | १६७ |
| न खरोष्ट्रावुष्ट्र | ... | १६७ |
| न गद्ये समात | ... | १५० |
| न गुप्तलक्षित | .... | ४८ |
| न तद्बाहुल्य | ... | १५४ |
| न धान्यपष्ठादिषु | ... | १६३ |
| न धृतधनुषीत्य | .. | १८२ |

| | | पृष्ठम् |
|---|---|---|
| न निद्राद्रुगिति | ... | १९० |
| न पाठधर्माः | ... | ८३ |
| न पादादौ खल्वा | ... | १५० |
| न पादान्तलघो | ... | १४९ |
| न पुनरितरे | ... | २२ |
| न पृथगारोहाव | ... | ७७ |
| न भ्रान्ता निष्कम्प | .... | ८२ |
| न लक्ष्मणः पृथक्त्वात् | ... | ५६ |
| न वाक्यालंकारार्थम् | ... | ४३ |
| न विरुद्धोऽतिशयः | ... | १२४ |
| न विशेषश्चेदे | ... | ५९ |
| न वृत्तदोषात्पृथ | ... | ५६ |
| न शणसूत्रवाना | ... | २३ |
| न शास्त्रमद्रव्ये | ... | १४ |
| न सरजसमित्य | ... | १८२ |
| नाङ्गुलिसङ्ग इति | ... | १९१ |
| नानिबद्धं चकास्त्येक | .. | ३७ |
| नापुष्टार्थत्वात् | ... | १२२ |
| नार्धे किंचित्समाप्तं | ... | १५० |
| नासंपृक्तत्वात् | ... | ७७ |
| नासन्तः संवेद्य | ... | ८२ |
| नित्या संहितैक | ... | १४८ |
| निपातेनाप्यभिहिते | .... | १६५ |
| निशम्यनिशमय्य | .... | १८६ |
| निष्पन्द इति षत्वं | ... | १९० |
| नेतरे तद्विपर्य | ... | १४ |

पृष्ठम्

नेन्द्रवाहने णत्व ... १९१
नेष्टाः श्लिष्टप्रिया .. १८४
नैक पदं द्विः ... १४८
नैकशब्दः सुप्सु ... १६१

प

पत्रपीतिमादिषु १६४
पत्रलमिति ... १६९
पदमनेकार्थमक्षर ... ९८
पदसंधेर्वैरूप्य ... ५७
पदाधानोद्धरण ... ३२
पद्मभागवद्वृत्त ... ३५
पद्ममनेकभेदम् .. ३५
पादाः पादस्यैकस्या ... ९९
पादानुप्रासः ... १०९
पिण्डाक्षरभेदे ... १०६
पुष्पमालाशब्दे .... ६१
पूरणार्थमनर्थकम् ... ४२
पूर्वनिपातेऽपभ्रंशो ... १६५
पूर्वे नित्याः ... ७०
पूर्वे शिष्या विवे ... १४
पृथक्पदत्वं ... ७९
प्रतिवस्तुप्रभृति ... १२५
प्रपीयेति पीङः ... १८७
प्राणिनि नीलेति ... १७४
प्रातिभादयः ... १८२

पृष्ठम्

बिम्बाधर इति ... १६२
बौद्धप्रतियोग्यपे ... १८०
ब्रह्मविदादयः .. १७०
ब्रह्मादिषु हन्ते ... १७०

भ

भङ्गादुत्कर्षः ... १०४
भिदुरादयः कर्म ... १७१
भिन्नवृत्तयति ... ५३

म

मधुपिपासुप्रभृ ... १६१
मनुष्यजातेर्वि ... १७४
मन्द मन्दमित्यप्र ... १९०
मसृणत्वं श्लेषः ... ७५
महीध्रादयो मूल .. १७०
माधुर्यसौकुमार्ये ... २१
मायादिविकल्पि ... ६३
मार्गाभेदः समता ... ७५
मार्गेरात्मनेपद ... १५९
मित्रेण गोत्रेति ... १८८
मिलिक्लबि ... १५७
मुक्ताहारश .... ६१
मुग्धिमादिष्विम ... १७८
मौक्तिकमिति ... १८१

य

यत्सादृश्य तत्स ... १४५

